वायुः । तस्मै ब्रह्मणे नमः प्रह्वीभावं 'करोमि' इति वाक्यशेषः । नमः ते तुभ्यं हे वायो, नमस्करोमि इति परोक्षप्रत्यक्षाभ्यां[1] वायुरेवाभिधीयते । किञ्च, त्वमेव चक्षुराद्यपेक्ष्य बाह्यं संनिकृष्टम् अव्यवहितं प्रत्यक्षं[2] ब्रह्म असि यस्मात्, तस्मात् त्वामेव[3] प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं यथाशास्त्रं यथा कर्तव्यं सुपरिनिश्चितमर्थं[4] त्वदधीनत्वात् त्वामेव वदिष्यामि । सत्यमिति स एव वाक्कायाभ्यां संपाद्यमानः[5] । सोऽपि त्वदधीन एव संपाद्य[6] इति त्वामेव सत्यं वदिष्यामि । तत् सर्वात्मकं[7] वाय्वाख्यं ब्रह्म मया एवं स्तुतं सत् मां विद्यार्थिनम्[8] अवतु विद्यासंयोजनेन । तदेव ब्रह्म वक्तारम् आचार्यं[9] वक्तृत्वसामर्थ्यसंयोजनेन । 'अवतु माम्,' 'अवतु वक्तारम्' इति पुनर्वचनम् आदरार्थम् ॥

1. 'नमो ब्रह्मणे' इति परोक्षाभिधानं कृतम्; 'नमस्ते वायो' इति प्रत्यक्षाभिधातृयुष्मच्छब्दप्रयोगेणापि स एवाभिधीयते इत्यर्थः ॥

2. प्राणद्वारेण हि देहेन्द्रियाण्यप्यात्मीयतया विज्ञायन्ते । अतः प्राणात्मना स्थितो वायुर्बाह्यचक्षुराद्यपेक्षया अव्यवहितप्रत्यक्षः ॥

3. शान्तिपाठे यद्यपि 'त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि' इत्येव वैदिकपाठः, तथाप्यत्र भाष्ये सायणभाष्ये च 'त्वामेव' इत्येव धृतः । अन्तिमशान्तौ तु 'त्वामेव' इत्येवोपलभ्यते । तदनुरोधेन किमत्रापि 'त्वामेव' इति प्राचीनपाठ आसीदित्येतत्तु विचारणीयं विद्वद्भिः ॥

4. 'अर्थम्' इत्यस्यानन्तरं 'तदपि' इत्यधिकम् आ॥; शास्त्रार्थनिर्धारणानुष्ठानरूपे ऋतसत्ये अपि ज्ञानक्रियाशक्त्यधिष्ठितवाय्वधीने एवेति वायुं तदभिन्नतया स्तौति ॥

5. निर्वर्त्यमानोऽर्थः ॥ 6. 'संपाद्यते' वा॥

7. वायुः सर्वप्राणभृत्क्रियात्मकः, ई॰ ४, १७; का॰ भा॰ २-१-६; सर्वदेवतात्मकः, बृ॰ भा॰ ३-९-९; सर्वविधारकश्च बृ॰ भा॰ ३-७-२.

8. अपरब्रह्मविद्यां प्रार्थयमानम् । उपासनास्वरूपज्ञानतत्फलकाङ्क्षिणम् इति यावत् ॥ 9. 'आचार्यं च' इति वा॥ पाठे चोऽधिकः ॥

शान्त्यभिधानत्रयस्य प्रयोजनम् –

१३. 'ॐ शान्तिः शान्तिः शान्तिः' इति त्रिर्वचनम् आध्यात्मिकाधिभौतिकाधिदैविकानाम्[1] विद्याप्राप्त्युपसर्गाणां प्रशमार्थम्[2] ॥ १ ॥

[इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पादपूज्यपादशिष्यश्रीमच्छङ्कर-भगवतः कृतौ तैत्तिरीयोपनिषच्छीक्षाध्यायभाष्ये प्रथमोऽनुवाकः ॥ ][3]

## २. शीक्षाध्यायः

**शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ॥ २ ॥**

१४. अर्थज्ञानप्रधानत्वात्[4] उपनिषदः, ग्रन्थपाठे यत्नोपरमो मा भूत् इति[5] शीक्षाध्याय आरभ्यते –

1. आध्यात्मिका उपसर्गाः शरीरगतरोगादिनिमित्ताः, आधिभौतिका व्याघ्रचोरादिनिमित्ताः, आधिदैविका अतिवृष्ट्यशन्यादिनिमित्ताः ॥

2. सर्वे ह्याध्यात्मिकादिविघ्नाः सर्वात्मकब्रह्मस्तुत्यादिना प्रशमं यान्ति । शान्त्यां हि सत्यां ब्रह्म ज्ञापयितुं ज्ञातुं च शक्यत इति तदर्थं त्रिः शान्तिरुच्यत इति भावः ॥

3. एवं सर्वत्रानुवाकपरिसमाप्तिपुष्पिका आनन्दाश्रममुद्रितपुस्तके दृश्यते । 'इति प्रथमानुवाकभाष्यम्' इत्येतावदेव तु वाणीविलासमुद्रणालयप्रकटिते । अत्र तु पुस्तके समनन्तरानुवाकसङ्ख्ययैव सर्वत्र समाप्तिर्बोध्या ॥

4. अर्थज्ञानप्रधाना वेदान्ताः न पुनर्मन्त्रवदुच्चारणप्रधानाः ॥

5. विवक्षितार्थसिद्ध्यर्थं सम्यग् ग्रन्थोच्चारणेऽपि यत्नः कार्य एवेति ॥

शिक्षा शिक्ष्यते अनया इति वर्णाद्युच्चारणलक्षणम् । शिक्ष्यन्त इति शिक्षाः वर्णादयः[1] । शिक्षैव शीक्षा । दैर्घ्यम् छान्दसम् । तां शीक्षां व्याख्यास्यामः । विस्पष्टम् आ समन्तात् प्रकथयिष्यामः । चक्षिङो वा[2] ख्याञादिष्टस्य व्याङ्पूर्वस्य व्यक्तवाक्कर्मण एतद्रूपम्[3] । तत्र वर्णः अकारादिः । स्वरः उदात्तादिः[4] । मात्रा ह्रस्वाद्याः[5] । बलं प्रयत्नविशेषः[6] । साम वर्णानां मध्यमवृत्त्या[7] उच्चारणम्, समता । सन्तानः सन्ततिः । संहिता इत्यर्थः । एष हि[8] शिक्षितव्योऽर्थः[9] । शिक्षा यस्मिन् अध्याये सोऽयं शीक्षाध्यायः इति एवम् उदितः – इत्युपसंहार उत्तरार्धः[10] ॥ २ ॥

1. शिक्ष्यतेऽनया इति करणव्युत्पत्तौ लक्षणं गम्यते । शिक्ष्यन्ते इति कर्मव्युत्पत्तौ तु वर्णादय अनुपदमेव वक्ष्यमाणा गम्यन्ते । अत्र वर्णादिपूग एव शिक्षेत्याचार्याभिप्रायो गम्यते । 'शिक्षा यस्मिन्नध्याये' इत्युत्तरत्र दर्शनात् ॥

2. 'वा' इति नास्ति वा ॥

3. ख्या प्रकथने – इत्यस्य धातोः सार्वधातुकमात्रविषयत्वमिति एतद्व्याख्यानेऽरुचेः स्यात् पक्षान्तरादानं 'चक्षिङो वा' इति । चक्षिङः ख्याञ् (पा. २-४-५४) इति हि ख्याञादिष्टः सः । अतश्चक्षिञ् व्यक्तायां वाचीत्यस्यैवैतद्रूपमित्यर्थः ॥

4. उदात्तानुदात्तस्वरिताः ॥ 5. ह्रस्वदीर्घप्लुताः ॥

6. बाह्याभ्यन्तरभेदभिन्नः संवृतादिविशेषप्रकारः प्रयत्नविशेषः ॥

7. अतिद्रुतातिविलम्बितत्वपरिहारपूर्वकम् ॥

8. 'एवं शिक्षितव्यो' इति (वा॥) पाठतो वरीयानयम् ॥

9. यद्यपि शीक्षादिशब्दानाम् एकश्रुत्या अधीयमानत्वात् व्याकरणोक्तप्रकृतिप्रत्ययादिप्रयुक्तः स्वरो नोपलक्ष्यते, तथापि संप्रदायप्रसिद्धः स्वरस्तथैवाभ्यसनीयः, तेन चादृष्टं फलं भविष्यति, शीक्षाध्यायविहितत्वात् स्वरादीनाम् – इति सायणभाष्ये ॥

10. शीक्षाध्यायमुपसंहृत्य, अथ तदन्तर्गतसंहिताविषयोपासना प्रारप्स्यत इति सूचनार्थं इत्यर्थः । 'उक्त इत्युपसंहारार्थः' इत्येतावानेव तु वा ॥

## ३. संहितोपासना

सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः स꣡ꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासंहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः संधिः । वायुः संधानम् । इत्यधिलोकम् अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् आदित्य उत्तररूपम् । आपः संधिः । वैद्युतः संधानम् । इत्यधिज्यौतिषम् । अथाधिविद्यम् । आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या संधिः । प्रवचनꣳ संधानम् । इत्यधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा संधिः । प्रजननꣳ संधानम् । इत्यधिप्रजम् । अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्संधिः । जिह्वा

**संधानम् । इत्यध्यात्मम् । इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । संधीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण[1] लोकेन ॥ ३ ॥**

उपासनाफलाशीर्वचनम् –

१५. अधुना संहितोपनिषत्[2] उच्यते । तत्र संहिताद्युपनिषत्परिज्ञाननिमित्तं[3] यद् यशः प्रार्थ्यते[4] तत् नौ आवयोः शिष्याचार्ययोः सहैव अस्तु । तन्निमित्तं च यद् ब्रह्मवर्चसं तेजः[5], तच्च सहैव अस्तु – इति शिष्यवचनम् आशीः । शिष्यस्य हि अकृतार्थत्वात् प्रार्थना उपपद्यते, नाऽऽचार्यस्य । कृतार्थत्वात् । कृतार्थो हि आचार्यो नाम भवति ॥

संहितोपासनाप्रकाराः –

१६. अथ अनन्तरम् अध्ययनलक्षणविधानस्य[6] । (अतः) यतोऽत्यर्थं ग्रन्थभाविता बुद्धिर्न शक्यते सहसा अर्थज्ञानविषये अवतारयितुम्[7] इत्यतः । संहितायाः उपनिषदं संहिताविषयं दर्शनम्[8]

1. 'सुवर्ग्येण', 'सुवर्गेण' इति द्वेधापि पाठोऽस्ति । कतरो युक्ततर इत्यत्र वैदिका एव शरणम् । भाष्ये त्वत्र किमपि नोक्तम् ॥ 2. संहिताविषयमुपासनम् ॥

3. अत्रादिशब्देनोपासनान्तराण्यपि ग्रहीतव्यानीति भाति । वार्तिकेऽपि 'संहितादिनिमित्तम्' (तै. वा. ३–५५) इत्येव दृश्यते ॥ 4. 'प्राप्यते' इति वा॥

5. शमदमज्ञानादिनिमित्तं तेजः । उत्तरत्र (३–६) तथा भाष्ये व्याख्यानात् ॥

6. 'पूर्ववृत्तस्य' इत्यधिकं वा॥; अध्ययनलक्षणं ग्रन्थपाठेऽनुसर्तव्यः प्रकारविशेषः । तद्विधानं पूर्ववृत्तम् । तदनन्तरमिदं विधीयत इत्यर्थः ॥

7. शब्दप्रवणचित्तानामर्थज्ञाने तदपेक्षया सूक्ष्मे बुद्धिप्रवेशः सहसा न भवतीत्यर्थः । एतेन, अथशब्दस्य शीक्षाव्याख्यानानन्तर्यमर्थः, अतःशब्दस्य संहितोपासनाप्रारम्भे हेतुभूतः सुखेन बुद्धिप्रवेशोऽर्थ इत्युक्तं भवति ॥

8. उपासनम् ॥

इत्येतत् । ग्रन्थसंनिकृष्टामेव[1] व्याख्यास्यामः । पञ्चसु अधिकरणेषु आश्रयेषु । ज्ञानविषयेषु इत्यर्थः । कानि तानीति ? आह । अधिलोकम् लोकेष्वधि यद्दर्शनम्[2] तत् अधिलोकम् । तथा अधिज्यौतिषम्, अधिविद्यम्, अधिप्रजम्, अध्यात्मम् इति । ता एताः पञ्चविषयाः उपनिषदः लोकादिमहावस्तुविषयत्वात् संहिताविषयत्वाच्च, महत्यश्च ताः संहिताश्च महासंहिता[3] इति आचक्षते कथयन्ति वेदविदः ॥

**उपासनाक्रमः –**

१७. अथ तासां यथोपन्यस्तानाम्[4] अधिलोकं दर्शनम् उच्यते । दर्शनक्रमविवक्षार्थो[5] ऽथशब्दः सर्वत्र । पृथिवी पूर्वरूपम्। पूर्वो वर्णः पूर्वरूपम्। संहितायाः पूर्वे वर्णे[6] पृथिवीदृष्टिः कर्तव्या इत्युक्तं भवति । तथा द्यौः उत्तररूपम्[7] । आकाशः अन्तरिक्षलोकः सन्धिः, मध्यं पूर्वोत्तररूपयोः । सन्धीयेते अस्मिन् पूर्वोत्तररूपे इति[8] । वायुः सन्धानम् । सन्धीयते अनेन

1. वर्णादिविषयत्वात् ॥

2. लोकानधिकृत्य, लोकदृष्ट्या, यदुपासनम् ॥

3. महावस्तुदृष्ट्या करणीयाः संहिताविषयोपासना इति महासंहिता इत्युच्यन्त इत्यर्थः ॥

4. उपन्यस्तानाम् इत्यनन्तरं 'मध्ये' इत्यधिकं वा॥

5. अधिलोकदर्शनं तावत् कर्तव्यम् । तदनन्तरम् अधिज्यौतिषम् इत्येवं क्रमेण उपासनानि कर्तव्यानीति विवक्षार्थः ॥

6. तद्यथा इषेत्वोर्जेत्वा इत्यत्र 'इषे त्वा ऊर्जे त्वा' इति संहितायाः पूर्वं स्थिते, पूर्वे वर्णे आकारे पृथिवीदृष्टिः कर्तव्या ॥

7. उत्तरे वर्णे ऊकाररूपे द्युलोकदृष्टिः कर्तव्येत्यर्थः । शालिग्रामे इव विष्णुदृष्टिः । एवंविधानि प्रतीकोपासनानीति व्यपदिश्यन्ते । सू. भा. ४-१-४.

8. त्वा ऊ इत्येतयोर्मध्यम् आकाशत्वेन चिन्तयेत् ॥

इति सन्धानम्[1] । इति अधिलोकं दर्शनम् उक्तम् । अथाधिज्यौतिषम् इत्यादि समानम्[2] । इतीमा इति उक्ता उपप्रदर्श्यन्ते[3] ॥

## संहितोपासनाफलम् –

१८. यः कश्चित् एवम्[4] एताः महासंहिताः व्याख्याताः वेद उपास्ते । 'वेद' इति उपासनं[5] स्यात् । विज्ञानाधिकारात्[6] । 'इति प्राचीनयोग्योपास्स्व' (१–६) इति च वचनात्[7]। **उपासनं च यथाशास्त्रं तुल्यप्रत्ययसन्ततिः[8], असङ्कीर्णा च अतत्प्रत्ययैः[9], शास्त्रोक्तालम्बनविषया च[10]** । प्रसिद्धश्चोपासनशब्दार्थो लोके 'गुरुम्

---

1. ओकारेण हि सन्धीयते इति सन्धानशब्दवाच्यः सः । सायणभाष्ये तु 'इषे त्वा' इत्यत्र एकारः पृथ्वी, तकारो द्युलोकः, तयोर्मध्य आकाशः, तस्मिन् देशे संहितानिमित्तो द्विर्भावेनापादितोऽन्यस्तकारो वायुरित्युपदिष्टम् ॥

2. यथोक्तमार्गेणैव व्याख्येयम् ॥

3. 'इतीमा महासंहिताः' इति वाक्येन यथोपवर्णिताः पञ्चोपनिषदः परामृश्यन्ते । विध्युपसंहारार्थम्, उत्तरवाक्येन फलसंकीर्तनार्थं चेति शेषः ॥

4. यथाविहितप्रकारेण ॥ 5. न तु वस्तुतन्त्रं ज्ञानम् ॥

6. उपासनप्रकरणत्वादस्येत्यर्थः । अस्यां हि वल्ल्याम् उपासनमेव ध्यानापराभिधानं प्रपञ्च्यते, न तु ज्ञानम् । विद्युपास्त्योश्च वेदान्तेष्वव्यतिरेकेण प्रयोगो दृश्यते ॥ सू. भा. ४-१-१; बृ. भा. १–४–७ (वेदोपासनशब्दयोरेकार्थता)

7. न केवलं प्रकरणात्, किन्तु 'उपास्स्व' इति कण्ठरवेणोक्तत्वाच्च वेदनमत्रोपासनमेव ॥

8. समानप्रत्ययप्रवाहीकरणम् ॥

9. विजातीयप्रत्ययैरमिश्रिता । तद्यथा- अधिलोकसंहितोपासने प्रस्तुते उपासनान्तरं लौकिकविषयप्रत्ययं वा नाभ्यन्तरीकुर्यात् । एवमेवोपासनान्तरेऽपि बोध्यम् ॥

10. सर्वत्र हि शास्त्रविहितमेवोपास्यं नाशास्त्रोक्तं विद्यमानमपि । छां. भा. २–२–१ ; अविद्यमानं स्वयमेव चिन्तयति चेत् विपरीतप्रत्ययत्वात् ततोऽनर्थप्राप्तिरेव स्यात् । बृ. भा. १–३–१ ; द्रष्टव्यमुपासनशब्दनिर्वचनं प्र. भा. ५–१ ; छां. भा. अव. ; गी. भा. १२–३.

उपास्ते', 'राजानम् उपास्ते' इति । यो हि गुर्वादीन्[1] सन्ततम् उपचरति स उपास्ते इत्युच्यते । स च[2] फलम् आप्नोति उपासनस्य । अतोऽत्रापि य एवं वेद[3] सन्धीयते प्रजादिभिः स्वर्गान्तैः । प्रजादिफलान्याप्नोति[4] इत्यर्थः ॥ ३ ॥

## ४. विविधा जपहोममन्त्राः

**यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ॥**

**आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः । वासाꣳसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह ।**

1. अत्र यद्यपि द्वे एव उदाहरणे, तथापीदृशस्थलेषु ध्यानोपासनशब्दौ एवमर्थकावेव प्रयुज्येते इत्युपलक्षणार्थमुदाहरणमिति बहुवचनेन द्योतयति । द्रष्टव्ये बृ. १-५-२, वे. सू. ४-१-१ भाष्ये ॥

2. य एवं सततध्यायी इत्यर्थः ॥

3. निरन्तरमुपास्ते ॥

4. 'प्रजादिफलं प्राप्नोति', इति वा॥ अत्र प्रजादीनि दृष्टफलानि, स्वर्गोऽदृष्टं फलम् ॥

लोमशां पशुभिः सह स्वाहा । आ मा यन्तु ब्रह्मचारिणः स्वाहा । वि मायन्तु ब्रह्मचारिणः स्वाहा । प्र मायन्तु ब्रह्मचारिणः स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा । शमायन्तु ब्रह्मचारिणः स्वाहा । यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन् सहस्रशाखे । नि भगाहं त्वयि मृजे स्वाहा । यथापः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ॥ ४ ॥

उत्तरग्रन्थसंबन्धः

१९. 'यश्छन्दसाम्' इति मेधाकामस्य श्रीकामस्य च[1] तत्प्राप्तिसाधनं जपहोमौ उच्येते । 'स मेन्द्रो मेधया स्पृणोतु', 'ततो मे श्रियमावह' इति च लिङ्गदर्शनात् ॥

मेधाप्रार्थना –

२०. यः छन्दसां वेदानाम् ऋषभ इव ऋषभः । प्राधान्यात् । विश्वरूपः सर्वरूपः । सर्ववाग्व्याप्तेः । 'तद्यथा शङ्कुना' (छां.२–२३–३)

1. उपलक्षणमेतत्, आरोग्यादिकामस्येत्यपि द्रष्टव्यम् । तत्प्रार्थनाया अन्यत्र दर्शनात् । अथवा तस्या मेधार्थत्वादेवमुच्यते ॥

इत्यादिश्रुत्यन्तरात्[1] । अत एव ऋषभत्वम् ओंकारस्य । ओंकारो हि अत्र उपास्यः इति ऋषभादिशब्दैः स्तुतिर्न्याय्यैव[2] ओंकारस्य । छन्दोभ्यः वेदेभ्यः । (अमृतात्)[3] वेदा हि अमृतम् । तस्मात् अमृतात् अधि संबभूव । लोक(देव)वेदव्याहृतिभ्यः सारिष्ठं जिघृक्षोः प्रजापतेस्तपस्यत ओंकारः सारिष्ठत्वेन प्रत्यभात्[4] – इत्यर्थः । न हि नित्यस्य[5] ओंकारस्य अञ्जसैव[6] उत्पत्तिः अवकल्पते[7] । स एवंभूत ओंकारः इन्द्रः सर्वकामेशः[8] परमेश्वरः[9] मा मां मेधया प्रज्ञया स्पृणोतु प्रीणयतु बलयतु वा[10] ।

1. अत्र पूर्णमेव श्रुतिवाक्यमुदाहृतं वा॥ ; यथा शङ्कुना पर्णनालेन सर्वाणि पर्णानि तदवयवजातानि व्याप्तानि, एवमोंकारेण सर्वा वाक् व्याप्ता । ओंकार-व्यतिरिक्तशब्दाभिधेयविकाराणामनृतत्वादोंकारस्यैव सर्ववाचकत्वेन पर्यवसानात् – इति श्रुतेरर्थः ॥

2. उपास्यत्वेन विहितस्य स्तवने हि· तदुपासनायां प्रवर्तेरन् अधिकारिणः ॥

3. इदं पदं न दृश्यते मुद्रितपुस्तकेषु ; अपेक्षितं तु ॥

4. देवपदं सर्वत्र मुद्रितपुस्तकेषु स्थितमप्यधिकं भाति । लोकसारत्वेन त्रयीविद्या तत्सारत्वेन भूरादिव्याहृतयः, तत्सारत्वेन चोंकारः प्रत्यभादिति हि छान्दोग्ये (२-२३-२) उक्तम् ॥

5. वेदस्यामृतत्वात्, तत्सारस्योङ्कारस्यापि तथात्वमिति भावः ॥

6. मुख्यवृत्त्यैव ॥

7. ओंकारस्य परमेश्वरवाचकत्वेन तेन नित्यसंबद्धत्वात् तस्य मुख्यवृत्त्यै वोत्पत्तिर्नोपपद्यते । तस्मात् 'संबभूव' इति प्रजापतेरेवं प्रत्यभात् इति व्याख्यात-मित्यभिप्रायः ॥

8. 'एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्' (का· १-२-१६) इति श्रुत्यन्तरात् ॥

9. परमेश्वरप्रतीकत्वात् तदभेदेन 'इन्द्रः' इत्युच्यते इति भावः ॥

10. स्पृ प्रीतिपालनयोरित्यस्माद्धातोरेवमर्थता हि अवगम्यते । पालयतु वा इत्येव मूले भाष्यकारैर्लिखितमेवं परिवर्तितं स्यादिति उन्नेतुं न शक्यते । 'पाङ्क्तं स्पृणोति' बलयति (१-७), स्पृणुते प्रीणयति बलयति वा (२-९) – इति सर्वत्र बलयतीत्येव दर्शनात् । पालनमेवाश्रित्य बलयतीति लिखितं वा इत्येतत्तु वैयाकरणैरेव निर्धारणीयम् ॥

प्रज्ञाबलं[1] हि प्रार्थ्यते । अमृतस्य अमृतत्वहेतुभूतस्य ब्रह्मज्ञानस्य[2] तदधिकारात्[3] । हे देव, धारणः धारयिता भूयासं भवेयम् ॥

## कार्यकरणयोग्यताप्रार्थनम् –

२१. किञ्च, शरीरं मे मम विचर्षणं विचक्षणम् योग्यम् इत्येतत् । 'भूयात्' इति प्रथमपुरुषविपरिणामः[4] । जिह्वा मे मम मधुमत्तमा मधुमती । अतिशयेन मधुरभाषिणी इत्यर्थः । कर्णाभ्यां श्रोत्राभ्यां भूरि बहु विश्रुवं व्यश्रवं (?) । श्रोता भूयासम् इत्यर्थः । आत्मज्ञानयोग्यः कार्यकरणसंघातो[6]ऽस्तु इति वाक्यार्थः[5] । मेधा च तदर्थमेव हि प्रार्थ्यते[7] ॥

## ज्ञानार्थं प्रार्थना –

२२. ब्रह्मणः परमात्मनः कोशः असि । असेरिव । उपलब्ध्यधिष्ठानत्वात्[8] । त्वं हि ब्रह्मणः प्रतीकम् । त्वयि ब्रह्म उपलभ्यते । मेधया लौकिकप्रज्ञया पिहितः आच्छादितः । स त्वं सामान्यप्रज्ञै[9]रविदित-

1. न केवलं धारणाक्षममेधाबलम् ॥

2. कार्यभूतममृतत्वम् । तद्वाचकेन शब्देन कारणभूतं ज्ञानं लक्ष्यते इत्यभिप्रायः ॥

3. कृत्स्नाया उपनिषदः ब्रह्मज्ञानप्रकरणत्वात् ॥

4. 'भूयासम्' इत्यस्योत्तमपुरुषस्य 'शरीरम्' इत्यनेनान्वयार्थं प्रथमपुरुषत्वेन विपरिणामः कर्तव्य इति भावः ॥

5. 'कार्यकारण' इति भा॥

6. जिह्वाकर्णग्रहणमुपलक्षणं करणान्तराणामिति भावः ॥

7. न मेधार्थमेव । विशेषकामसिद्ध्यर्थमनुष्ठेयानां काम्यकर्मणां कर्मकाण्डे एव विहितत्वात्, ज्ञानकाण्डेऽस्मिन् ज्ञानार्थमेव मेधादिप्रार्थना क्रियत इत्यवगम्यते ॥

8. एषणात्रयोत्थितास्त्वय्येव परमात्मानं पश्यन्तीत्यर्थः । परमात्मनोऽभिधानत्वात्, प्रतीकत्वाच्चेति वार्तिके (१-७५) । भाष्यमते तु प्रतीकत्वेनैव ग्राह्य ओंकार इति विवक्षितमिति समनन्तरोत्तरवाक्याद्गम्यते ॥

9. लौकिकप्रज्ञा बाह्यविषयाभिनिवेशः । अशास्त्रप्रज्ञैर्यस्मादमृतत्वप्राप्तिसाधनत्वेन न ज्ञातः ; अत एव त्वां नोपासते ते, इत्यर्थः ॥

तस्त्व इत्यर्थः । श्रुतं श्रवणपूर्वकम् आत्मज्ञानादिकं[1] मे गोपाय रक्ष । तत्प्राप्त्यविस्मरणादिकं[2] कुरु इत्यर्थः । जपार्था एते मन्त्रा मेधाकामस्य ॥

**श्रीकामस्य होमार्थमन्त्राः –**

२३. होमार्थास्तु अधुना श्रीकामस्य मन्त्रा[3] उच्यन्ते । आवहन्ती आनयन्ती । वितन्वाना विस्तारयन्ती । तनोतेस्तत्कर्मत्वात्[4] । कुर्वाणा निर्वर्तयन्ती आचीरं अचिरं क्षिप्रमेव । छान्दसो दीर्घः । चिरं वा[5] कुर्वाणा । आत्मनः मम । किमिति ? आह । वासांसि वस्त्राणि मम गावश्च । गाश्च[6] इति यावत् । अन्नपाने च सर्वदा । एवमादीनि कुर्वाणा श्रीर्या तां ततः मेधानिर्वर्तनात् परम् आवह आनय । अमेधसो हि श्रीः अनर्थायैव इति[7] । किंविशिष्टाम् ?[8] लोमशाम् अजाव्यादियुक्ताम्, अन्यैश्च पशुभिः सह युक्ताम्[9] । आवह इति अधिकारात् ओंकार एव अभिसंबध्यते[10] । स्वाहा ! स्वाहाकारो होमार्थमन्त्रान्तज्ञापनार्थः ॥

---

1. ज्ञानोपायोऽत्रादिशब्देन ग्राह्यः । 'आत्मज्ञानादिकं विज्ञानम्' वा॥ ; 'आत्मविज्ञानम्' इत्येतावदेव तु क्वचित्पाठः । येन रागद्वेषादिभ्यो रक्षितेन श्रुतेन त्वत्सायुज्यमेव प्राप्नुयाम् इत्यभिप्रायः ॥

2. आदिशब्देन शिष्येषु विनियोगो गृह्यते ॥

3. 'श्रीकामस्य होमार्थास्तु अधुना उच्यन्ते मन्त्राः' इति वा ॥

4. विस्तारार्थकत्वात् ॥

5. 'कुर्वाणा चीरम्' इति च्छेदे इदं व्याख्यानम् । चिरकालं यावदित्यर्थः ॥

6. 'गावश्च' इति प्रथमायाः द्वितीयात्वेन विपरिणामः कर्तव्य इति भावः ॥

7. इति हेतोः शास्त्रज्ञाननिर्वर्तनादनन्तरमेव श्रियमावहेति प्रार्थ्यत इत्यर्थः ॥

8. 'किंविशिष्टां च श्रियम्', 'किंविशिष्टां च' इति च पाठान्तरे ॥

9. 'पशुभिः संयुक्ताम्' इति आ॥ अत्र गृहीतस्तु वा॥ 'दैवेन मानुषेणैव वित्तेनाऽऽमुत्रिकैहिकम् । कर्म कर्तुमलं यस्मात् प्रार्थ्यते तेन तद्द्वयम् ॥ (१-८१) इति वार्तिकम् । तत्र दैवं वित्तं मेधा, मानुषं तु पश्वादियुक्ता श्रीः ॥

10. ओंकार एव हि उपास्यत्वेन प्रकृतः । अतः स एव श्रियमावह इति प्रार्थ्यते ॥

## शिष्यागमनाद्यर्थं मन्त्राः –

२४. (आमायन्त्विति ।)[1] आयन्तु माम् इति व्यवहितेन संबन्धः । ब्रह्मचारिणो वि माऽऽयन्तु (?) प्र मायन्तु । दमायन्तु शमायन्तु इत्यादि[2]। यशो यशस्वी जने जनसमूहे[3] असानि भवानि[4] । श्रेयान् प्रशस्यतरः वस्यसः वसीयसः[5] वसुतरात् वसुमत्तराद्वा[6] । असानि इत्यन्वयः[7] ॥

## ओंकाराभिन्नपरमेश्वरसायुज्यप्रार्थना –

२५. किञ्च, तं ब्रह्मणः कोशभूतं त्वा त्वां हे भग भगवन् पूजावन्[8], प्रविशानि । प्रविश्य च अनन्यस्त्वदात्मैव भवानि इत्यर्थः[9] ।

---

1. कोष्ठकस्थः 'आमायन्त्विति' इति क्वाचित्कः पाठो गृहीतः वा ॥

2. अत्र 'विमायन्तु' इत्यादयो मन्त्राः शाखान्तरगतत्वाभिप्रायेण केषुचिद्देशेषु नाऽऽम्नायन्ते इति सायणः । वार्तिके तु आ मा यन्तु प्र मा यन्तु इत्येतौ व्याख्यातौ दृश्येते । 'संभूय कोटिशश्चैव मामेवायन्तु सत्वराः' इति श्लोकार्धं को मन्त्रो व्याख्यात इति नु दुर्निर्धारणम् ॥ भाष्यस्थेन 'इत्यादि' इत्यनेन किमभिप्रेतमिति नावगम्यते । दमायन्तु शमायन्तु इति वाक्यद्वयं नैव व्याख्यातमित्यतो भाष्यकारैः स्वीकृतं वा न वेति विचारणीयमेतद्विमर्शकैर्विद्वद्भिः ॥

3. यशो जने यशस्विजनेषु इति वा ॥

4. बहुब्रह्मचार्यागमनप्रयोजनमिदं यशआदि ॥

5. वस्यस इतीदं वसीयसः इत्यस्य छान्दसं रूपम् । ईकारलोपश्छान्दसः ॥

6. वसुतरात् अतिशयेन वसोः, वसनशीलस्येत्यर्थः । वासगृहादिमत इति यावत् । अथवा वसुरिति वसुमान् उच्यते । वसीयसः अतिशयेन वसुमतोऽपि सकाशात् अहं श्रेयान् भवानीति प्रार्थना । 'वसुमत्तराद्वा' इत्यनन्तरम् 'अनेकार्थत्वाद्धातूनां तुल्यजातीयानां विशेषवान् धनवत्स्वजातीयपुरुषाद्विशेषवान् असानि' इत्यधिकं क्वचित् . वा ॥ पाठे तु धनवज्जातीयेत्यादि 'असानि' इत्यन्तम् अधिकम् । तदनपेक्षितमिति भाति ॥

7. 'इत्यर्थः' इति वा ॥ 8. 'पूजार्ह' वा ॥

9. यद्यपि ओंकारस्य प्रतीकस्य उपासनाकाले उपासकात्मभावो न संभवति (सू. भा. ४ १ ४), तथाप्युपासनाफलरूपेण ओंकाराभिन्नपरमेश्वरस्यात्मभावोऽस्तु इति प्रार्थना न विरुध्यते ॥

स त्वमपि मा मां भग भगवन् पूजावन्[1], प्रविश । आवयोः एकत्वमेवास्तु[2] । तस्मिन् त्वयि सहस्रशाखे बहुभेदे[3] निमृजे शोधयामि अहं पापकृत्याम्[4] ॥

## बहुशिष्यागमनप्रार्थनोपसंहारः –

२६. यथा लोके आपः प्रवता प्रवणवता निम्नवता देशेन यन्ति गच्छन्ति[5] । यथा च मासा अहर्जरम् । संवत्सरोऽहर्जरः । अहोभिः परिवर्तमानो लोकान् जरयति[6], अहानि वा अस्मिन् जीर्यन्ति अन्तर्भवन्तीति अहर्जरः । तं च यथा मासा यन्ति[7], एवं मां ब्रह्मचारिणः हे धातः सर्वस्य[8] विधातः, माम् आयन्तु आगच्छन्तु सर्वतः सर्वदिग्भ्यः । प्रतिवेशः श्रमापनयनं स्थानम् । आसन्नगृहम्[9] इत्यर्थः । एवं त्वं प्रतिवेश इव प्रतिवेशः । त्वच्छीलिनां[10] सर्वपापदुःखापनयनस्थानमसि । अतो मा मां प्रति प्रभाहि प्रकाशय आत्मानम् । प्र मा पद्यस्व[11] प्रपद्यस्व च माम् । रसविद्धमिव लोहं त्वन्मयं त्वदात्मानं कुरु[12] इत्यर्थः ॥

1. नास्त्येतत् वा ॥ 2. 'एकात्मत्वमेव' वा॥

3. ओंकारस्यैकस्यैव वेदशाखाभेदेन बहुभेदवत्त्वम्, अथवा परमेश्वरस्यैव बहुमूर्तिभेदेन बहुभेदत्वम् । 'बहुशाखाभेदे हे भगवन्' इति वा॥ पाठे तु द्वितीयोऽर्थो न संगच्छते ॥

4. सर्वदुरितक्षयोऽस्तु त्वदात्मताप्राप्तिफलक इत्यर्थः ॥

5. स्वरांशे निदर्शनमिदम् ॥ 6. 'जरयतीति' वा॥

7. अनुक्रमेण सातत्येन च यथा संवत्सरमेत्य तत्रान्तर्भवन्तीत्यर्थः ॥

8. कर्मफलस्येति शेषः ॥

9. 'आसन्नं गृहम्' इति वा॥ 'प्रतिप्राणिप्रवेशाद्वा प्रतिवेशोऽसि-कीर्त्यसे।' (१-९१) इत्यर्थान्तरमपि वार्तिके दृश्यते ॥

10. त्वदुपासकानाम् ॥

11. 'प्र मा पद्यस्व' इत्येतत् त्रुटितम् आ॥ पाठे ; गृहीतं तु वा॥ पाठे ॥

12. स्वत्साक्षात्कारम् अनुगृहाणेति यावत्

अत्र श्रीकामोऽपि ज्ञानार्थ एव –

२७. श्रीकामोऽस्मिन् विद्याप्रकरणे अभिधीयमानो धनार्थः। धनं च कर्मार्थम्[1]। कर्म च उपात्तदुरितक्षयार्थम्[2]। तत्क्षये हि विद्या प्रकाशते। तथा च स्मृतिः – 'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः। यथादर्शतले प्रख्ये पश्यत्यात्मानमात्मनि ॥' (मो. ध. २०४–८)[3] इति ॥

## ५. व्याहृत्यात्मब्रह्मोपासना

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः। तासामु ह स्मैतां चतुर्थीम्। माहाचमस्यः प्रवेदयते। मह इति। तद्ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः। भूरिति वा अयं लोकः। भुव इत्यन्तरिक्षम्। सुवरित्यसौ लोकः। मह इत्यादित्यः। आदित्येन वाव सर्वे लोका महीयन्ते। भूरिति वा अग्निः। भुव इति वायुः। सुवरित्यादित्यः। मह इति चन्द्रमाः।

1. गृहस्थानामपि मुमुक्षूणां ज्ञानमात्रेऽधिकारः इत्येतत्प्रकृतप्रणवोपासनवाक्यगतश्रीकामादिलिङ्गाल्लभ्यते ॥

2. 'क्षयाय' आ॥

3. 'यथादर्शतलप्रख्ये' इत्यतो वरीयानयं पाठः। यथा आदर्शतले निघर्षणादिना स्वच्छतां गमिते आत्मानं प्रतिबिम्बितं पश्यति, एवम् आत्मन्यन्तःकरणेऽपि दुरितक्षयात् शुद्धिं गते स्वात्मानं पश्यतीत्यर्थः। 'पश्यन्त्यात्मानम्' इति आ॥; या॥ पाठे मुद्रितमहाभारते च 'पश्यत्यात्मानम्' इत्येवास्ति ॥

4

चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि । मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ॥ ५ ॥

अनुवाकसंबन्धः –

२८. संहिताविषयम् उपासनम् उक्तम् । तदनु मेधाकामस्य श्रीकामस्य च मन्त्रा अनुक्रान्ताः । ते च पारम्पर्येण विद्योपयोगार्था एव । अनन्तरं व्याहृत्यात्मनो ब्रह्मणः, अन्तरुपासनम् स्वाराज्यफलं प्रस्तूयते ॥

२९. भूः, भुवः, सुवः – इति । इतीत्युक्तोपप्रदर्शनार्थः[1] । 'एतास्तिस्रः' इति प्रदर्शितानां परामर्शार्थः । परामृष्टाः स्मार्यन्ते[2] वै[3] इत्यनेन । तिस्र एताः प्रसिद्धा व्याहृतयः स्मार्यन्ते[4] तावत्[5] । तासाम् इयं

1. 'भूर्भुवःसुवरित्युक्तोपप्रदर्शनार्थः' इति (आ॥)पाठस्तु न समीचीनः । अत्र गृहीतस्तु वा॥ पाठो यथापरिशोधितः । 'इतिरुक्तोपप्रदर्शनार्थः' इत्यपि पाठः सुकल्पनः ॥

2. 'स्मर्यन्ते' इति (वा॥) पाठो न श्लिष्टः ॥

3. 'वेत्यनेन' इति आ॥ पाठोऽशुद्धः ॥

4. वै इति प्रसिद्धार्थकेन स्मार्यन्ते, अनूद्य चतुर्थव्याहृतिनिर्देशार्थम् इत्यर्थः ॥

5. 'इति यावत्' इति (वा॥) पाठोऽनपेक्षितः ॥

चतुर्थी व्याहृतिः 'महः' इति । ताम् एतां चतुर्थीं महाचमसस्य अपत्यं[1] माहाचमस्यः प्रवेदयते । 'उ, ह, स' इत्येतेषां वृत्तानुकथनार्थत्वात् विदितवान् ददर्श – इत्यर्थः[2] । माहाचमस्यग्रहणम् आर्षानुस्मरणार्थम् । ऋष्यनुस्मरणमपि[3] उपासनाङ्गमिति गम्यते । इहोपदेशात्[4] ॥

## महइतिव्याहृतेः प्राधान्यम् –

२०. येयं माहाचमस्येन दृष्टा व्याहृतिर्मह इति, तद् ब्रह्म । महद् हि ब्रह्म । महश्च व्याहृतिः[5] । किं पुनस्तत् ? स आत्मा । आप्नोतेर्व्याप्तिकर्मणः[6] आत्मा । इतराश्च व्याहृतयो लोकाः, देवाः, वेदाः, प्राणाश्च मह इत्यनेन व्याहृत्यात्मना आदित्यचन्द्रब्रह्मान्नभूतेन व्याप्यन्ते यतः । अतः अङ्गानि अवयवाः अन्या देवताः । देवताग्रहणम् उपलक्षणार्थं लोकादीनाम्[7] । महः इत्येतस्य[8] व्याहृत्यात्मनो देवलोकादयः[9] सर्वे अवयवभूताः । यत[10] आह आदित्यादिभिः लोकादयो महीयन्त इति ।

1. 'माहाचमस्यः' इत्यत्र तद्धितार्थ अपत्यमिति ॥

2. प्रवेदयते स्म ह इति ददर्शेत्यर्थक इत्यभिप्रायः ॥

3. ऋषिस्मरणम् श्रा॥

4. ऋषिस्मृतिमिश्रितमेवोपासनं कर्तव्यमित्यर्थः । माहाचमस्य इत्युपदेशफलमिदम् । अतीतानान्तरानुवाके प्रोक्तानां मन्त्राणां तु ब्राह्मणोत्पन्नत्वात्, तत्र ऋष्याद्युपदेशाभावात्, यथोपदेशमेव विनियोगः ॥

5. ब्रह्मशब्दस्य वृद्ध्यर्थक बृहिधातोरुत्पन्नत्वान्महत्त्ववक्तृत्वम्; व्याहृतेर्मह इत्यभिधानादेव च महत्त्वम् । एतत्सामान्येन महद्ब्रह्मेति ध्यायेत् ॥

6. आप्लृ व्याप्तौ इति धातोर्व्युत्पन्नत्वादात्मशब्दस्य, व्यापकत्वादात्मा मह इत्यर्थः ॥

7. लोकदेववेदप्राणानामित्यर्थः ॥

8. 'इत्यस्य' वा॥

9. 'देवा लोकादयश्च' (वा॥) इत्यतो चरमयमेव गृहीतः पाठः ॥

10. 'यतः अत आह' वा॥

आत्मना हि अङ्गानि[1] महीयन्ते । महनं वृद्धिः, उपचयः । महीयन्ते, वर्धन्ते इत्यर्थः[2] ॥

## चतसृणां व्याहृतीनां प्रत्येकं चतुष्प्रकारत्वम् –

३१. अयं लोकः, अग्निः, ऋग्वेदः, प्राणः – इति प्रथमा व्याहृतिः 'भूः' इति । एवम् उत्तरोत्तरा एकैका चतुर्धा भवति[3] । मह इति ब्रह्म । ब्रह्म इत्योङ्कारः । शब्दाधिकारे अन्यस्य असंभवात्[4] । उक्तार्थम् अन्यत्[5] ॥

'ता वा एताश्चतस्रश्चतुर्धा' इति । ता वा एताः भूः, भुवः, सुवः, महः – इति चतस्रः एकैकशः चतुर्धा चतुष्प्रकाराः । धाशब्दः प्रकारवचनः । चतस्रश्चतस्रः सत्यः चतुर्धा भवन्ति इत्यर्थः[6] । तासां यथाक्लृप्तानां पुनरुपदेशः तथैवोपासनानियमार्थः[7] ॥

---

1. 'महोव्याहृतिर्हिरण्यगर्भस्य ब्रह्मणो मध्यभाग आत्मेति कल्प्यते । इतराश्च व्याहृतयः पाद्याद्यवयवत्वेन कल्प्यन्ते । प्रथमा व्याहृतिः पादौ, द्वितीया बाहू, तृतीया शिर इत्यर्थः' इति टीकाकृत् । अत्र गमकं न पश्यामः । बृहदारण्यके तु व्यत्यस्तक्रमेणैवाङ्गान्यनुक्रान्तानि ॥ बृ. ५-५-३.

2. आत्मना हि सर्वव्यापकेन तदङ्गानि वर्धन्ते ॥

3. 'भूः' इत्यस्यानन्तरं 'अन्तरिक्षं, वायुः, सामानि, अपानः – इति द्वितीया व्याहृति भुवः । असौ लोकः, आदित्यः, यजूंषि व्यानः – इति तृतीया व्याहृतिः सुवः । आदित्यः, चन्द्रमाः, ब्रह्म, अन्नम् – इति चतुर्थी व्याहृतिः महः । इत्येवम् एकैकाश्चतुर्धा भवन्ति' इति वा॥ ; एतत्तु गृहीतपाठमनुसृत्य केनचिदनुक्रान्तमित्यवसीयते । 'तथैवान्या यथाक्रमम्' (१-१०२) इति वार्तिकदर्शनात् ॥

4. अभिधेयस्य ब्रह्मण असंभवात् ॥

5. अन्यत् उक्तार्थम् । 'आदित्याभिर्लोकादयो महीयन्ते' इत्यादिनेति शेषः॥

6. एकैका व्याहृतिश्चतुर्धा भवतीति व्याहृतिचतुष्टयात्मकस्य ब्रह्मणः षोडशविधत्वम् इत्यर्थः ॥

7. उक्तप्रकारेण षोडशधैव उपास्याः इति नियमविधिरयम् इति 'चतस्रश्चतस्रश्चतुर्धा' इति पुनरुपदेशाद् गम्यते । अन्यथा चतुर्धा कल्पनम् उपासनास्तुत्यर्थम् इति मन्येतेति भावः । अत्राऽऽदित्यचन्द्रादिभूतेन मुख्योव्याहृत्यात्मना तदितरमहनं तु ब्राह्मणप्रसिद्ध्या विज्ञेयम् इति 'वाव' इत्यनेन द्योत्यते ॥

व्याहृत्युपासनं वक्ष्यमाणविशेषणसहितमेकमेव –

३२. ता यथोक्तव्याहृतीः[1] यो वेद, स वेद विजानाति । किम् ?[2] ब्रह्म । ननु 'तद्ब्रह्म स आत्मा' इति ज्ञाते ब्रह्मणि न वक्तव्यम् अविज्ञातवत् 'स वेद ब्रह्म' इति । न । तद्विशेषविवक्षुत्वाददोषः । सत्यम्, विज्ञातं चतुर्थव्याहृत्यात्मा ब्रह्म इति । न तु तद्विशेषः, हृदयान्तरुपलभ्यत्वं मनोमयत्वादिश्च 'शान्तिसमृद्धम्' इत्येवमन्तो विशेषणविशेषरूपो[3] धर्मपूगो विज्ञायत इति तद्विवक्षु हि शास्त्रम् अविज्ञातमिव ब्रह्म मत्वा 'स वेद ब्रह्म' इत्याह । अतो न दोषः । यो हि वक्ष्यमाणेन धर्मपूगेन विशिष्टं ब्रह्म वेद, स वेद ब्रह्म इत्यभिप्रायः ॥

अतो वक्ष्यमाणानुवाकेन एकवाक्यता अस्य[4] । उभयोर्हि अनुवाकयोः एकम् उपासनम् । लिङ्गाच्च । 'भूरित्यग्नौ प्रतितिष्ठति' इत्यादिकं लिङ्गम् उपासनैकत्वे[5] । विधायकाभावाच्च । न हि 'वेद, उपासितव्यः' इति[6] विधायकः कश्चित् शब्दोऽस्ति व्याहृत्यनुवाके[7] । 'ता यो वेद'

---

1. 'यथोक्ता' वा॥

2. 'किं तत्' इति वा॥ पाठे 'तत्' इत्यधिकम् ॥

3. 'विशेषणविशेष्य' इति वा॥ पाठो न युक्तः ॥

4. न तूपासनद्वयविधानमत्र शङ्कितव्यम् । 'स य एषोऽन्तर्हृदये आकाशः' इत्याद्यनुवाके यद्गुणकं ब्रह्म निर्दिश्यते तदेवेहोपास्यम् न तु केवलव्याहृतिचतुष्टयरूपमिति बोधनार्थं 'स वेद' इति कथनमित्यभिप्रायः ॥

5. वक्ष्यमाणानुवाके एतदुच्यते । न तु तत्र 'भूरिति वा अग्निः' इति यथात्र । यथोपासनं च फलम् इति न्याय्यम् । तदेतल्लिङ्गमुभयोरनुवाकयोरेकमेवोपासनं विधीयत इत्यत्र ॥

6. 'उपासीत वा इति' इति (वा॥) पाठे उपासीत इति वा इति क्रमभेदोऽपेक्ष्यते ॥

7. उत्तरानुवाके तु 'इति प्राचीनयोग्योपास्स्व' इति विधिरस्ति ॥

इति च[1] वक्ष्यमाणार्थत्वात् नोपासनाभेदकः[2] वक्ष्यमाणार्थत्वं च 'तद्विशेषविवक्षुत्वात्' इत्यादिना उक्तम् ॥

अङ्गोपासनाफलम् –

३३. सर्वे देवा अस्मै एवंविदुषे अङ्गभूता आवहन्ति आनयन्ति बलिं स्वाराज्यप्राप्तौ[3] सत्याम् इत्यर्थः ॥ ५ ॥

## ६. महोब्रह्मोपासने स्थानादि

**स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले । भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ । सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षु-**

1 चशब्दस्त्वर्थे । 'इति तु' इत्येव वा ॥

2. 'ता यो वेद स वेद ब्रह्म' इति न विधिः, किन्तु वक्ष्यमाणगुणकब्रह्मपरामर्शकः । न चात्रान्यो विधायकः शब्दोऽस्ति ॥

3. 'आप्नोति स्वाराज्यम्' इत्युत्तरत्र पठिष्यते । अहमस्मि मह इति व्याहृत्यात्मकं ब्रह्म, मदङ्गानि देवादयः – इति यो वेद तस्यैतत्फलमित्यर्थः । अत्र 'लोकदेवादयः' इति वार्तिकेऽस्ति । सर्वाण्यङ्गान्यस्य अनुकूलानि भवन्तीत्येतदर्थकं तत् ॥

## ष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो भवति । आकाशशरीरं ब्रह्म । सत्यात्म-प्राणारामं मनआनन्दम् । शान्तिसमृद्ध-ममृतम् । इति प्राचीनयोग्योपास्स्व ॥ ६ ॥

अनुवाकसंबन्धः –

३४. भूर्भुवःसुवःस्वरूपा मह इत्येतस्य[1] व्याहृत्यात्मनो ब्रह्मणः अङ्गानि अन्या देवता[2] इत्युक्तम् । यस्य ता अङ्गभूताः, तस्यैतस्य ब्रह्मणः साक्षात् उपलब्ध्यर्थम्[3], उपासनार्थं च हृदयाकाशः स्थानमुच्यते शालग्राम इव विष्णोः । तस्मिन् हि तद्ब्रह्म, उपास्यमानं मनोमयत्वादिधर्म-विशिष्टं साक्षात् उपलभ्यते पाणाविव आमलकम् । मार्गश्च[4] सर्वात्मभाव-प्रतिपत्तये[5] वक्तव्यः इत्यनुवाकः आरभ्यते ॥

व्याहृत्यात्मकब्रह्मण उपलब्धिस्थानं विशेषणानि च –

३५. 'सः' इति व्युत्क्रम्य 'अयं पुरुषः' इत्यनेन संबध्यते । य एषः अन्तर्हृदये हृदयस्यान्तः । हृदयम् इति पुण्डरीकाकारो मांसपिण्डः प्राणायतनः, अनेकनाडीसुषिरः, ऊर्ध्वनालः अधोमुखः, विशस्यमाने पशौ

1. एतदनन्तरं 'हिरण्यगर्भस्य' इत्यधिकं वा ॥

2. देवलोकादय इत्यर्थः ॥

3. साक्षात्करणार्थम् इत्यर्थः । अहमयमेवेति तद्भावापत्तस्य हि उपासना-फलम् । सू. भा. ३-३-५९.

4. उपासनास्थानवत् उपास्यविशेषणवच्च मार्गश्च वक्तव्यः, यस्मात् तदनु-शीलनेन तेनैव मार्गेण प्रतिष्ठते, उपास्यदेवताप्राप्तये ॥ सू. भा. ४-२-१७.

5. सर्वात्मभावोऽत्र मनोमयत्वादिगुणकब्रह्मभावः । तस्याः प्रतिपत्तिः प्राप्तिः । अयं च भावो हिरण्यगर्भसाधर्म्यमिति व्याख्यातव्यम् । पश्यन्तूत्तरत्र 'आप्नोति मनसस्पतिम्' इत्यस्य टिप्पणम् ॥

प्रसिद्ध उपलभ्यते । तस्यान्तः, य एषः प्रसिद्ध एव करकाकाशवत्[1], तस्मिन् सोऽयं[2] पुरुषः । पुरि शयनात्[3] । पूर्णा वा भूरादयो लोकाः येन[4], इति पुरुषः । मनोमयः । मनः विज्ञानम् । मनुतेर्ज्ञानकर्मणः[5] । तन्मयः तत्प्रायः । तदुपलभ्यत्वात्[6] । मनुते अनेन इति वा मनः, अन्तःकरणम् । तदभिमानी तन्मयः[7] । तल्लिङ्गो वा[8] । अमृतः अमरणधर्मा[9] । हिरण्मयो ज्योतिर्मयः[10] ॥

**उपासकस्य ब्रह्मप्राप्तये नाडीमार्गः –**

३६. तस्यैवंलक्षणस्य हृदयाकाशे साक्षात्कृतस्य विदुष आत्मभूतस्य[11] ईदृशस्वरूपप्रतिपत्तये[12] मार्गः अभिधीयते । हृदयात्

---

1. सर्वगतस्यापि हृदयान्तःस्थत्ववचनं तदुपहितत्वाभिप्रायेण कमण्डल्ववच्छिन्नाकाशवत् । तस्मात् 'य एषः' इति प्रसिद्ध एव भूताकाशः परामृष्ट इत्यभिप्रायः ॥

2. 'सः' इति व्युत्क्रम्य संबन्धः – इति यदुक्तं, तस्योपप्रदर्शनमिदम् । योऽयं परोक्षत्वेनोपदिष्टो महोव्याहृत्यात्मकः, सोऽयं हृदयाकाशे द्रष्टव्य इत्यर्थः ॥

3. हृदये स्थितत्वात्, तत्रोपलभ्यमानत्वात् ॥

4. भूरादिलोकात्मका व्याहृतयो मह इत्यनेन व्याप्ता इति ह्युक्तम् ॥

5. मन ज्ञाने, मनु अवबोधने – इति धातुद्वयमस्ति । अत्र यद्याद्यो धातुर्विवक्षितः तदा 'मन्यतेः' इति निर्देशः स्यात् इत्यतः मनु अवबोधने–इत्यस्यैवोपादानम् इति भाति । 'मनुते' इत्येव वार्तिकेऽपि (१-११४) दृश्यते । 'मनो मनोतेः' (नै. ४-१-५) इति निरुक्तम् । अत्र वैयाकरणैरेव निर्धारणीयं तत्त्वम् ॥

6. मनसा उपलभ्यत्वमेव तत्प्रायत्वम् इत्युक्तं भवति ॥

7. समष्टिज्ञानशक्त्युपाधित्वात् ॥ छां. भा. ३-१४-२.

8. मनसा हि लिङ्ग्यतेऽयं पुरुषः । समष्टिमनउपाधिकत्वात् ॥

9. हिरण्यगर्भरूपेण कल्पान्तःस्थायित्वात् । वस्तुतः परमेश्वराव्यतिरेकाच्च ॥

10. न हि वस्तुत एव हिरण्यविकारत्वं संभवति तस्येत्यर्थः ॥

11. इन्द्रस्येत्यधिकम् आ॥

12. ईदृशेति, उक्तविशेषणविशिष्टेत्यर्थः । 'ईश्वररूपस्य प्रतिपत्तये' इति वा॥

ऊर्ध्वं प्रवृत्ता सुषुम्ना[1] नाम नाडी, योगशास्त्रेषु च प्रसिद्धा। सा च अन्तरेण मध्ये प्रसिद्धे तालुके तालुकयोः[2] गता। यश्चैष तालुकयोर्मध्ये स्तन इवावलम्बते मांसखण्डः। तस्य च अन्तरेण इत्येतत्। यत्र च[3] केशान्तः। केशानाम् अन्तः, अवसानं[4] मूलं केशान्तः। विवर्तते विभागेन वर्तते। मूर्धप्रदेश इत्यर्थः[5]। तं देशं प्राप्य तत्र विनिःसृता[6]। व्यपोह्य विभज्य विदार्य शीर्षकपाले शिरःकपाले विनिर्गता या सा इन्द्रयोनिः। इन्द्रस्य ब्रह्मणो योनिः मार्गः। स्वरूपप्रतिपत्तिद्वारम् इत्यर्थः[7]॥

## उपासनाफलम् –

३७. तया एवं विद्वान् मनोमयात्मदर्शी मूर्ध्नो विनिष्क्रम्य अस्य लोकस्य अधिष्ठाता भूरिति व्याहृतिरूपो योऽग्निर्महतो ब्रह्मणोऽङ्गभूतः, तस्मिन् अग्नौ प्रतितिष्ठति। अग्न्यात्मना इमं लोकं व्याप्नोति इत्यर्थः। तथा भुव इति द्वितीयव्याहृत्यात्मनि वायौ। 'प्रतितिष्ठति' इत्यनुवर्तते। सुवरिति तृतीयव्याहृत्यात्मनि आदित्ये। मह इत्यङ्गिनि चतुर्थव्याहृत्यात्मनि ब्रह्मणि प्रतितिष्ठति[8]। तेष्वात्मभावेन स्थित्वा, आप्नोति ब्रह्मभूतः

---

1. इयं नाडी का॰ २–३–१६, प्र॰ ३–७, छां॰ ८–६–६ एतासूपनिषत्सु परामृष्टा॥

2. 'अन्तरान्तरेण युक्ते' (पा॰ २–३–४) इति द्वितीया मूले। भाष्ये तु 'तालुकयोर्मध्ये' इति तदर्थकथनमिति भाति॥

3. एतदनन्तरम् 'अग्नौ' इत्यधिकं वा॥

4. त्यक्तमिदं वा॥; मूलस्याप्यन्तशब्दवाच्यत्वं तदधः केशानामभावात् इत्यभिप्रायेण 'अवसानम्' इत्युक्तिः॥

5. एतयैव द्वारा परमात्मा कार्यकरणसङ्घातं प्रविष्टवान् इति ऐतरेयिणः समामनन्ति। ऐ॰ आ॰ १–३–१२॰

6. नास्त्येतत्पदं वा॥; 'तेनान्तरेण' इत्यधिकं तु तत्र॥

7. एतया नाड्या उदानवायुपूरितया रेचकप्राणायामबलेन उपासको व्रजेत् – इति वार्तिके (१–११६, ११७) विशेष उक्तः॥

8. मह इत्यङ्गिनि चतुर्थव्याहृत्यात्मनि ब्रह्मणि प्रतितिष्ठतीति वा॥; मह इति व्याहृत्यात्मैवात्र प्राधान्येनोपास्यः। अङ्गोपासनाफलम् अग्न्यादिभावं प्राप्य क्रमेणाङ्गिनि प्रतितिष्ठतीत्यर्थः॥

स्वाराज्यं स्वराड्भावम्[1] । स्वयमेव राजा अधिपतिः भवति ; अङ्गभूतानां देवानां यथा ब्रह्म । देवाश्च सर्वे अस्मै[2] बलिमावहन्ति अङ्गभूताः, यथा ब्रह्मणे[3] । आप्नोति मनसस्पतिम् । सर्वेषां हि मनसां पतिः । सर्वात्मकत्वाद् ब्रह्मणः । सर्वैर्हि मनोभिस्तन्मनुते । तदाप्नोत्येवं विद्वान् । किञ्च वाक्पतिः सर्वासां वाचां पतिर्भवति । तथैव चक्षुष्पतिः चक्षुषां पतिः । श्रोत्रपतिः श्रोत्राणां पतिः । विज्ञानपतिः विज्ञानानां च पतिः । सर्वात्मकत्वात् सर्वप्राणिनां करणैस्तद्वान् भवतीत्यर्थः ॥

## मनोमयात्मनो विशेषणान्तराणि –

३८. किञ्च ततोऽपि अधिकतरम् एतद्भवति । किं तत् ? उच्यते । आकाशशरीरम् । आकाशः शरीरम् अस्य[4], आकाशवद् वा सूक्ष्मं शरीरम् अस्य[5] इत्याकाशशरीरम् । किं तत् ? प्रकृतं ब्रह्म ।

1. अत्र स्वाराज्यम् आदित्यमण्डलस्थेश्वरायत्तमेव, न तु निरङ्कुशम् । अत एवात्र ‘आप्नोति मनसस्पतिम्’ यः सर्वेषां मनसां पतिः पूर्वसिद्ध ईश्वरः तं प्राप्नोतीत्युक्तम् । अतो जगदुत्पत्त्यादिव्यापारवर्जम् अणिमाद्यैश्वर्यं प्राप्नोतीत्येव स्वाराज्यप्राप्तिवाचोयुक्तेरर्थः – इति शारीरकभाष्ये (४-४-१७, १८).

2. एतदनन्तरम् ‘अङ्गिने’ इत्यधिकं घा॥

3. तस्मै देवा बलिमावहन्तीत्युक्तानुवाद एषः ॥

4. आकाशोपाधिकम्, सर्वात्मकत्वात् ॥

5. मनोमयत्वात् सूक्ष्मं शरीरम् इत्यर्थः । पूर्वत्र व्याख्याने वैराजं रूपमभिप्रेतम्, इदानीं तु हैरण्यगर्भम् । अत एव वाक्यशेषे प्रकृतं मनोमयत्वादिगुणकं ब्रह्मेत्याह । उभयथापि उपहितस्यैकत्वे सति तत्पदैश्वर्यप्राप्तिमात्रस्य स्वाराज्यत्वेन विवक्षितत्वाददविरोधः ॥

सत्यात्म । सत्यं मूर्तामूर्तम्[1] ; अवितथस्वरूपं वा[2] आत्मा स्वभावः अस्य तदिदं सत्यात्म । प्राणारामम् । प्राणेषु आरामः आरमणम् आक्रीडा अस्य तत् प्राणारामम्[3]; प्राणानां वा आरामो यस्मिन् तत् प्राणारामम्[4] । मनआनन्दम् । आनन्दभूतं सुखकृदेव[5] यस्य मनः तत् मनआनन्दम् । शान्तिसमृद्धम् । शान्तिः उपशमः । शान्तिश्च तत् समृद्धं च शान्तिसमृद्धम्[6] ; शान्त्या वा समृद्धम् तत् उपलभ्यते इति शान्तिसमृद्धम् । अमृतम् अमरणधर्मि[7] । एतच्च अधिकतरं विशेषणं तत्रैव 'मनोमयः' इत्यादौ द्रष्टव्यम्[8] ॥

1. पृथिव्यादिभूतत्रयं मूर्तम्, वाय्वाकाशौ चामूर्तम् – इति द्वैराश्येन पञ्चभूतानि विभज्य, तत्र मूर्तं सत्, अमूर्तं च त्यत् – इति श्रुतिनिर्देशात् सत्यशब्दवाच्यं मूर्तामूर्तम् । यद्यपि श्रुत्यन्तरे निर्विशेषब्रह्मणः स्वरूपनिर्दिदिक्षया मूर्तामूर्ते निह्नोतव्यत्वेनैवानूदिते, तथाप्यत्रापरब्रह्मप्रकरणत्वात् तयोर्ब्रह्मस्वभावत्वोक्तिर्न विरुध्यत इति बोध्यम् ॥

2. 'अवितथं स्वरूपं च' इति आ॥ 'अवितथस्वरूपं वा' इति वा॥ गृहीतपाठस्त्वस्माभिरेव कल्पितः प्रकृतसंगत्यर्थम् । यावत्कल्पान्तस्थायित्वात् सत्यम्, अवितथमस्य स्वरूपमिति ह्यर्थोऽत्र संगतः । अत्रापि व्याख्यानद्वयं यथाक्रमं वैराजं हैरण्यगर्भं च स्वरूपमादाय योजनीयं पूर्ववत् ॥

3. सर्वप्राणव्यापकत्वेन तेषामात्मत्वात् इति भावः ॥

4. तदायत्तत्वात्प्राणानां व्यापारस्य ॥

5. दुःखासंमिश्रितम् । सत्त्वप्रचुरत्वात् ॥

6. धर्मज्ञानवैराग्यादेः सहसिद्धत्वस्मृतेः, ज्ञानक्रियासमष्ट्युपाधिकत्वाच्च प्रजापतेः शान्तिसमृद्धत्वम् ॥ बृ. भा. १–४–२.

7. कार्यब्रह्मलोकप्रलयपर्यन्तमवस्थायित्वात् ॥

8. मनोमयः, अमृतः, हिरण्मयः – इत्युक्तविशेषणैः सहोपसंहर्तव्यमिति, अत्र फलसंकीर्तनादवगम्यत इति भावः ॥

उपासनोपदेशोपसंहारः –

३९. इति एवं मनोमयत्वादिधर्मैर्विशिष्टं यथोक्तं ब्रह्म हे प्राचीनयोग्य, उपास्स्व इत्याचार्यवचनोक्तिः आदरार्था[1] ॥ ६ ॥

## ७. ब्रह्मणः पाङ्क्तरूपेणोपासनम्

पृथिव्यन्ता [illegible]
अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप
ओषधयो वनस्पतय आकाश आत्मा ।
इत्यधिभूतम् । अथाध्यात्मम् । प्राणो
व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं
मनो वाक् त्वक् । चर्म माꣳसꣳ स्नावास्थि-
मज्जा । एतदधिविधाय ऋषिरवोचत् ।
पाङ्क्तं वा इदꣳ सर्वम् । पाङ्क्तेनैव
पाङ्क्तꣳ स्पृणोतीति ॥ ७ ॥

अनुवाकविषयः –

४०. यदेतद् व्याहृत्यात्मकं ब्रह्म उपास्यम् उक्तम्, तस्यै[3]-वेदानीं पृथिव्यादिपाङ्क्तस्वरूपेणोपासनम् उच्यते । पञ्चसंख्यायोगात्

1. 'प्राचीनयोग्य' इति माहाचमस्योक्तिर्योग्यशिष्यस्यैव विद्याया-मधिकार इति द्योतनद्वारेण उपासनायामादरप्रदर्शनार्था-इत्यर्थः । 'उक्तस्तूपासना-शब्दार्थः' इत्यधिकं वा॥

2. अत्र वा॥ पाठे 'अवान्तरदिशः' इति मूले भाष्ये च दृश्यते । कतरः पाठोऽत्र युक्त इत्यत्राध्येतार एव प्रमाणम् ॥

3. तस्यैवेति । अपरब्रह्मण एवेत्यर्थः ॥

पङ्क्तिच्छन्दःसंपत्तिः[1] । ततः पाङ्क्तत्वं सर्वस्य । पाङ्क्तश्च यज्ञः[2] । पञ्चपदा पङ्क्तिः[3] । 'पाङ्क्तो यज्ञः' (तै. सं. १-५-२) इति श्रुतेः[4] । तेन यत् सर्वं लोकादि आत्मान्तं च पाङ्क्तं परिकल्पयति, यज्ञमेव तत् परिकल्पयति । तेन यज्ञेन परिकल्पितेन पाङ्क्तात्मकं प्रजापतिम् अभिसंपद्यते[5] । तत् कथं पाङ्क्तं वा इदं सर्वमिति[6] ? अत आह–

बाह्यपाङ्क्तत्रयम् –

४१. पृथिवी, अन्तरिक्षम, द्यौः, दिशः, अवान्तरदिशाः[7]– इति लोकपाङ्क्तम् । अग्निः, वायुः, आदित्यः, चन्द्रमाः, नक्षत्राणि– इति देवतापाङ्क्तम् । आपः, ओषधयः, वनस्पतयः, आकाशः, आत्मा– इति भूतपाङ्क्तम् । आत्मा इति विराट्[8] । भूताधिकारात् । 'इत्यधिभूतम्' इति अधिलोकाधिदैवतपाङ्क्तद्वयोपलक्षणार्थम् । लोकदेवतापाङ्क्तयोश्चाभिहितत्वात्[9] ॥

आध्यात्मिकपाङ्क्तत्रयम्

४२. अथ अनन्तरम् अध्यात्मं पाङ्क्तत्रयम् उच्यते । प्राणादि वायुपाङ्क्तम् । चक्षुरादि इन्द्रियपाङ्क्तम् । चर्मादि धातुपाङ्क्तम्[10] ॥

1. पञ्चसंख्यासंबन्धात् पङ्क्तिच्छन्दस्त्वेन संपादनम् ॥

2. पत्नीयजमानपुत्रदैवमानुषवित्तैः पञ्चभिः संपाद्यत इति पाङ्क्तो यज्ञः । तेन यज्ञत्वसंपादनमपि पञ्चसंख्यायोगात् भवति ॥

3. पङ्क्तिच्छन्दस अष्टाक्षरसंमिताः पञ्चपादा विद्यन्ते ॥

4. इदं वाक्यम् 'पञ्चपदा पङ्क्तिः' इत्यस्मात्प्रागेव निवेशनीयम् ॥

5. प्राप्नोति ॥ 6. कथं पाङ्क्तत्वेन परिकल्पयितव्यमिति ॥

7. 'दिशः' वा॥ 8. स्थूलसमष्ट्युपाधिः ॥

9. 'पाङ्क्तयोर्द्वयोश्च' इति वा ॥

10. यद्यपि रसादयो धातवः सप्तेति वैद्यशास्त्रप्रसिद्धिः, तथापि चर्मादयः शरीरस्य धारणाद्धातव उच्यन्तेऽत्र ॥

पाङ्क्तोपासनाफलम् –

४२. एतावद् हि इदं सर्वम् । अध्यात्मं बाह्यं च पाङ्क्तमेव इति एतत् एवम्[1] अधिविधाय परिकल्प्य ऋषिः वेदः, एतद्दर्शनसंपन्नो वा[2] कश्चिद् ऋषिः, अवोचत् उक्तवान् । किमिति ? आह । पाङ्क्तं वा इदं सर्वम् पाङ्क्तेनैव आध्यात्मिकेन संख्यासामान्यात् पाङ्क्तं बाह्यं स्पृणोति । बलयति । पूरयति । एकात्मतया उपलभते[3] इत्येतत् । एवं पाङ्क्तम् इदं सर्वम् इति यो वेद, स प्राजापत्यात्मैव[4] भवति इत्यर्थः ॥ ७ ॥

## ८. ओंकारोपासनम्

**ओमिति ब्रह्म । ओमितीद सर्वम् । ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति । ओमिति सामानि गायन्ति । ओ शोमिति शस्त्राणि श सन्ति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा**

1. एतत् इति क्रियाविशेषणं एवमित्यनेन व्याख्यातम् । सर्वं पाङ्क्तमेवेतीत्यर्थः ॥ 2. साक्षात्कारवान् वा इत्यर्थः ॥

3. 'उपलभ्यते' इति पाठस्तु न साधुः । आध्यात्मिकेन एकात्मतया उपलभते, नाध्यात्मिकाद्व्यतिरिक्तं बाह्यं पाङ्क्तमित्येतत् साक्षात्कुरुते इत्यर्थः । आध्यात्मिकं पाङ्क्तत्रयमितरपाङ्क्तत्रयात्मना विद्यात् – इति केचित् । तेषामेतद्भाष्येण विरोधः स्फुट एव ॥

4. पाङ्क्तमेव सर्वं प्रजापतेर्मम शरीरभूतम् इत्युपास्य साक्षात्कृतवतः प्रजापत्यात्मत्वं फलम् इत्यर्थः ॥

**प्रसौति । ओमित्यग्निहोत्रमनुजानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति ॥ ८ ॥**

अनुवाकविषयः —

४४. व्याहृत्यात्मनो ब्रह्मण उपासनम् उक्तम् । अनन्तरं च पाङ्क्तस्वरूपेण तस्यैवोपासनम् उक्तम् । इदानीं सर्वोपासनाङ्गभूतस्य[1] ओंकारस्य उपासनं विधित्स्यते । परापरब्रह्मदृष्ट्या हि उपास्यमान ओंकारः, शब्दमात्रोऽपि परापरब्रह्मप्राप्तिसाधनं भवति । स हि आलम्बनं ब्रह्मणः परस्य अपरस्य च, प्रतिमेव विष्णोः । 'एतेनैवायतनेन एकतरमन्वेति' (प्र. ५–२) इति श्रुतेः ॥

ओंकारोपासनाविधिः—

४५. ओमिति । इतिशब्दः स्वरूपपरिच्छेदार्थः[2] । ओं इत्येतच्छब्दरूपं ब्रह्मेति मनसा धारयेत्, उपासीत । यतः, ओमिति इदं सर्वम्[3] । सर्वं हि शब्दरूपं ओंकारेण व्याप्तम् । 'तद्यथा शङ्कुना' (छां. २–२३–३) इति श्रुत्यन्तरात्[4] । अभिधानतन्त्रं ह्यभिधेयम् इत्यतः, इदं सर्वम् ओंकार इत्युच्यते[5] ॥

1. परापरोपासनाङ्गभूतस्य । बृ. पञ्चमाध्यायभाष्येऽवतरणिका द्रष्टव्या ॥

2. अर्थरूपाद् व्यावर्त्य शब्दरूपं समर्पयितुम् । अत्र 'इतिः शब्दरूपपरिच्छेदार्थः' इत्यपि मूलपाठः स्यादित्युन्नेतुं शक्यम् ॥

3. एतत्त्रुटितं मुद्रितपुस्तकेषु ॥

4. यथा शङ्कुना पर्णनालेन सर्वाणि पत्रावयवजातानि व्याप्तानि, एवम् ओंकारेण सर्वं शब्दजातं व्याप्तम् इति छान्दोग्यश्रुत्यर्थः ॥

5. ओंकारो हि सर्ववाचकः । तदवयवभूतेन अकारेण सर्वशब्दानां व्याप्तत्वात् सर्वस्याप्यभिधेयस्य ओंकारवाच्यत्वम् । अभिधानवशेन ह्यभिधेयं प्रकाश्यते इति अभिधानभूत ओंकारः सर्वमित्युक्तम् ॥

ओङ्कारस्तुतिः –

४६. ओङ्कारस्तुत्यर्थ[1] उत्तरो ग्रन्थः । उपास्यत्वात्तस्य । ओं इत्येतत् अनुकृतिः अनुकरणम् । 'करोमि', 'यास्यामि च'–इति कृतम् उक्तम्[2] ओं इत्यनुकरोति अन्यः । अतः ओङ्कारोऽनुकृतिः । ह स्म वै इति प्रसिद्धावद्योतकाः[3] । प्रसिद्धं हि ओङ्कारस्य अनुकृतित्वम् । अपि च 'ओ श्रावय' इति प्रैषपूर्वकम् आश्रावयन्ति प्रतिश्रावयन्ति[4] । तथा ओं इति सामानि गायन्ति सामगाः । ओं शोम् इति शस्त्राणि शंसन्ति, शस्त्रशंसितारोऽपि[5] । तथा ओं इति अध्वर्युः प्रतिगरं प्रतिगृणाति[6] । ओं इति ब्रह्मा प्रसौति अनुजानाति[7] । ओं इति अग्निहोत्रम् अनुजानाति । जुहोमि इत्युक्ते ओं इत्येव अनुज्ञां प्रयच्छति । ओं इत्येव ब्राह्मणः प्रवक्ष्यन् प्रवचनं करिष्यन् अध्येष्यमाणः ओमित्येव आह । ओमिति[8] प्रतिपद्यते अध्येतुम् इत्यर्थः । ब्रह्म वेदम् उपाप्नवानि

---

1. 'स्तुत्यर्थम्' इति आ॥

2. 'उक्तः' इति (वा॥) पाठोऽशुद्धः ॥

3. 'प्रसिद्धार्थ....' वा॥

4. दर्शपूर्णमासादियागेषु यजुर्वेदोक्तकर्मानुष्ठायिनोऽध्वर्यवो यस्मिन् काले आग्नीध्रं प्रति प्रैषप्रयोगकाले 'ओ श्रावय' इति मन्त्रं पठन्ति । हे आग्नीध्र, देवान् प्रति हविष्प्रदानावसरं श्रावय इति मन्त्रार्थः इति सायणः । अत्र ओकार ओङ्कारपूर्वभागानुकृतिः ॥

5. शस्त्राणि निष्केवल्यप्रउगादिनामकानि बह्वृचा होतारः पठन्ति । तत्र अध्वर्युं प्रत्यनुज्ञां याचमानाः 'अध्वर्यो शोंसावोम्' इति याचन्ते । अत्र हि मन्त्रे आदौ शोमिति, अन्ते चोङ्कारोऽस्ति ॥

6. होत्रा शस्त्रे पठ्यमाने तत्पुरतः स्थितेनाध्वर्युणा तत्प्रोत्साहनार्थं पठ्यमानः 'ओथामोद इव' इत्यादिशब्दः प्रतिगरः । तत्र प्रतिगरादौ ओङ्कारः प्रयोक्तव्यः ॥

7. ऋत्विजम् इति शेषः ॥ अत्र 'प्रैषपूर्वकमाश्रावयन्ति' इत्यधिकं आ॥ पाठे । तत्त्वनपेक्षितम् ॥

8. अत्र 'ओमित्याह । ओमित्येव प्रतिपद्यते अध्येतुम्' इति वा॥

इति प्राप्नुयां प्रवेक्ष्यामि इति । उपाप्नोत्येव ब्रह्म । अथवा, ब्रह्म परमात्मानम् उपाप्नवानि इति आत्मानं प्रवक्ष्यन् प्रापयिष्यन्[1] 'ओं' इत्येव आह । स च तेन ओङ्कारेण ब्रह्म प्राप्नोत्येव । ओङ्कारपूर्वं प्रवृत्तानां क्रियाणां फलवत्त्वं यस्मात्, तस्मात् ओङ्कारं ब्रह्मेत्युपासीत – इति वाक्यार्थः ॥ ८ ॥

## ९. कर्मणां पुरुषार्थसाधनत्वम्

ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्याय-प्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्याय-प्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च । सत्यमिति सत्यवचा राथीतरः । तप इति तपोनित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ॥ ९ ॥

1. वच परिभाषणे इति धातुमादाय प्रथमं व्याख्यानम् । ओङ्कारोच्चारण-पूर्वकम्, अध्येतुं प्रवर्तते यस्मात् तस्माद्वेदं प्राप्नोतीति । वह प्रापणे इति धातुं स्वीकृत्य तु द्वितीयं व्याख्यानम् । आत्मानं परमात्मानं प्रापयिष्यामीति ओङ्कार-ध्यानपूर्वकं प्रयतते यस्मात्, तस्मात्तं प्राप्नोत्येवेति ॥

**अनुवाकविषयः –**

४७. विज्ञानादेवाप्नोति स्वाराज्यम् (अनु. ६, भा. भा. ३७) इत्युक्तत्वात्, श्रौतस्मार्तानां कर्मणाम् आनर्थक्यं प्राप्तम् इत्यतः, तन्मा[1] प्रापत् इति कर्मणां पुरुषार्थं[2] प्रति साधनत्वप्रदर्शनार्थं[3] इह उपन्यासः ॥

**मुमुक्षुणा अवश्यानुष्ठेयानि कर्माणि –**

४८. ऋतम् इति व्याख्यातम् (भा. भा. १२) स्वाध्यायः अध्ययनम् । प्रवचनम् अध्यापनम्, ब्रह्मयज्ञो वा । एतानि ऋतादीनि 'अनुष्ठेयानि' इति वाक्यशेषः । सत्यं[4] सत्यवचनम्[5] । यथाव्याख्यातार्थं (भा. भा. १२) वा । तपः कृच्छ्रादि । दमः बाह्यकरणोपशमः । शमः अन्तःकरणोपशमः । अग्नयः[6] आधातव्याः । अग्निहोत्रं च होतव्यम् । अतिथयश्च पूज्याः । मानुषम् इति लौकिकः संव्यवहारः[7]; तच्च यथाप्राप्तम् अनुष्ठेयम् । प्रजा च उत्पाद्या । प्रजनश्च प्रजननम् । ऋतौ भार्यागमनम् इत्यर्थः । प्रजातिः पौत्रोत्पत्तिः । पुत्रो निवेशयितव्यः इत्येतत् ॥

**स्वाध्यायप्रवचनयोः प्राधान्यम् –**

४९. सर्वैरेतैः कर्मभिर्युक्तस्यापि स्वाध्यायप्रवचने यत्नतोऽनुष्ठेये इत्येवमर्थं सर्वेण सह स्वाध्यायप्रवचनग्रहणम् । स्वाध्यायाधीनं हि अर्थ-

---

1. 'एतन्मा' इति वा॥

2. अपरब्रह्मप्राप्तिं प्रति । कर्मकाण्डे तु आश्रमकर्मत्वेन विहितानि कर्माणि । इह पुनर्विद्यासहकारित्वेनेति विशेषः ॥ सू. भा. ३-४-३५.

3. 'प्रदर्शनार्थम्' आ॥

4. 'सत्यं च' इति आ॥ पाठे चशब्दो मूलप्रतीकमिति ग्राह्यम् ॥

5. 'सत्यवदनम्' इति वा॥

6. 'अग्नयश्च' इति चयुक्तः पाठः वा॥

7. लौकिकसंव्यवहारो विवाहादिः – इति टीकाकृत् ॥

ज्ञानम् । अर्थज्ञानायत्तं[1] च परं श्रेयः । प्रवचनं च तदविस्मरणार्थं धर्मप्रवृद्ध्यर्थं[2] च । अतः[3] स्वाध्यायप्रवचनयोरादरः कार्यः । सत्यमिति सत्यमेव अनुष्ठेयम् इति सत्यवचाः । सत्यमेव वचो यस्य सोऽयं सत्यवचाः; नाम वा तस्य[4] । राथीतरः रथीतरसगोत्रः[5] । राथीतर आचार्यो[6] मन्यते । तप इति तप एव कर्तव्यम् इति तपोनित्यः । तपसि नित्यः तपः परः; तपोनित्य इति वा नाम[7] । पौरुशिष्टिः पुरुशिष्टस्य अपत्यं पौरुशिष्टिराचार्यो मन्यते । स्वाध्यायप्रवचने एवानुष्ठेये इति नाको नामतः । मुद्गलस्य अपत्यं मौद्गल्य आचार्यो मन्यते । तद् हि तपः, तद् हि तपः । यस्मात् स्वाध्यायप्रवचने एव तपः, तस्मात् ते एव अनुष्ठेये इति । उक्तानामपि सत्यतपःस्वाध्यायप्रवचनानां पुनर्ग्रहणम् आदरार्थम्[8] ॥ ९ ॥

## १०. त्रिशङ्कोरार्षदर्शनम्

**अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव ।**
**ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि ।**
**द्रविणꣳ सवर्चसम् । सुमेधा अमृतोक्षितः ।**
**इति त्रिशङ्कोर्वेदानुवचनम् ॥ १० ॥**

---

1. 'अर्थज्ञानाधीनं' वा॥ 2. 'धर्मवृद्ध्यर्थम्' इति वा॥
3. 'ततः' इति वा॥
4. 'सत्यवचः' इति न यौगिकः शब्दः, किन्तु संज्ञानामेति वा॥
5. 'रथितरस्य गोत्रः' इति वा॥ 6. 'राथीतराचार्यो' वा॥
7. सत्यमेव अनुष्ठातव्यम्, तप एव कर्तव्यम् इति च य उपदिशति स तत्प्रयोजनं स्वयमनुभूतवानित्येव क्लिश्यते । अतोऽत्र केवलनाममात्रस्वस्वीकरणापेक्षया 'सत्यवचाः', 'तपोनित्यः' – इति च यौगिकशब्दावेतौ इति प्रथमव्याख्यानमेव साधीय इति युज्यते । योगरूढौ वा शब्दावेतौ स्याताम् ॥
8. एतेषामेव प्राधान्यं दर्शयितुमित्यर्थः । तत्रापि स्वाध्यायप्रवचनयोस्तपस्त्वेन संस्तुतत्वात् तत्र विशेषत आदरो गम्यते ॥

मन्त्राम्नायो जपार्थः –

५०. 'अहं वृक्षस्य रेरिवा' इति स्वाध्यायार्थो[1] मन्त्राम्नायः। स्वाध्यायश्च विद्योत्पत्तये। प्रकरणात्। विद्यार्थं[2] हि, इदं प्रकरणम्। न च अन्यार्थत्वम् अवगम्यते[3]। स्वाध्यायेन च विशुद्धसत्त्वस्य विद्योत्पत्तिरवकल्पते[4]॥

५१. अहं वृक्षस्य उच्छेदात्मकस्य[5] संसारवृक्षस्य रेरिवा प्रेरयिता, अन्तर्याम्यात्मना[6]। कीर्तिः ख्यातिः गिरेः पृष्ठमिव उच्छ्रिता मम। ऊर्ध्वपवित्रः। ऊर्ध्वं कारणं पवित्रं पावनं ज्ञानप्रकाश्यं[7] परं ब्रह्म यस्य सर्वात्मनो मम सोऽहम् ऊर्ध्वपवित्रः। वाजिनीव वाजवतीव। वाजम् अन्नम्; तद्वति सवितरीव[8] इत्यर्थः। यथा सवितरि अमृतम् आत्मतत्त्वं प्रसिद्धं श्रुतिस्मृतिशतेभ्यः[9], एवं स्वमृतं शोभनं विशुद्धम् आत्मतत्त्वम्[10] अस्मि भवामि। द्रविणं धनं सवर्चसं दीप्तिमत्; तदेव आत्मतत्त्वम्। 'अस्मि' इत्यनुवर्तते। ब्रह्मज्ञानं वा आत्मतत्त्वप्रकाशकत्वात् सवर्चसं द्रविणमिव द्रविणम्। मोक्षसुखहेतुत्वात्[11]। अस्मिन् पक्षे 'प्राप्तं मया' इत्यध्याहारः

---

1. जपार्थः॥ 2. न केवलं स्वाध्यायादिकर्मविधानार्थम्॥

3. अन्यत्र विनियोजकप्रमाणान्तरेऽसति प्रकरणानुसरणमेव न्याय्यम्॥

4. 'अवकल्प्यते' इति (आ॥) पाठतोऽयं (वा॥) पाठः साधीयान्। शुद्धसत्त्वस्य उपासनमाशुफलं ददाति, ज्ञानं वा उत्पद्यते – इत्युपपद्यते इत्यर्थः॥

5. 'व्रश्चू च्छेदने' इति धातोरुत्पन्नो वृक्षशब्द उच्छेदात्मकत्वं संसारवृक्षस्य सूचयतीति भावः। 'उच्छेद्यात्मकस्य' इति वा॥

6. अन्तर्यामिसंनिधिमात्रेण हि जगद्विपरिवर्तते॥ गी. भा. ९-१०.

7. ऊर्ध्वमूलो हि सर्वः संसारवृक्षः। अतोऽहमपि ऊर्ध्वपवित्रः। बृ. का. २-३-१, गी. १५-१. 'ज्ञानप्रकाश्यं' इत्यस्यानन्तरं 'पवित्रम्' इत्यधिकं आ॥

8. अयं वा॥ पाठः। 'सवितरि' इत्येतावदेव तु आ॥

9. सवितरि विशुद्धमात्मतत्त्वमिति श्रुतिषु (छां. ३-१, २, बृ. ५-५-३, तै. ना. १४ इत्याद्यासु), स्मृतिषु च (गी. ८-४ इत्याद्यासु) प्रसिद्धम्॥

10. 'अमृतम्' इत्यस्यार्थं आत्मतत्त्वमिति॥

11. आत्मतत्त्वं स्वयंप्रकाशत्वात् द्रविणम् इति प्रथमं व्याख्यानम्। यथा लोके द्रविणं सुखप्राप्तिहेतुः, एवं ब्रह्मज्ञानं मोक्षसुखप्राप्तिहेतुत्वात् द्रविणम् इति द्वितीयम्॥

कर्तव्यः[1] । सुमेधाः । शोभना मेधा सर्वज्ञत्वलक्षणा[2] यस्य मम सोऽहं सुमेधाः । संसारस्थित्युत्पत्त्युपसंहारकौशलयोगात्[3] सुमेधस्त्वम् । अत एव, अमृतः अमरणधर्मा । अक्षितः अक्षीणः, अव्ययः ; अक्षतो वा[4] । अमृतेन वा उक्षितः[5] सिक्तः । 'अमृतोक्षितोऽहम्' (?) इत्यादि ब्राह्मणम् ॥

**कर्मणो ज्ञानहेतुत्वम्** –

५२. इति एवं त्रिशङ्कोः ऋषेः ब्रह्मभूतस्य ब्रह्मविदः[6] वेदानुवचनम् । वेदः वेदनम् । आत्मैकत्वविज्ञानम् । तस्य प्राप्तिम् अनुवचनम् वेदानुवचनम् । आत्मनः कृतकृत्यताप्रख्यापनार्थं वामदेववत्[7] त्रिशङ्कुना आर्षेण[8] दर्शनेन दृष्टः मन्त्राम्नाय आत्मविद्याप्रकाशक इत्यर्थः ॥

अस्य च जपो विद्योत्पत्त्यर्थोऽवगम्यते[9] । 'ऋतं च' – इत्यादि कर्मोपन्यासादनन्तरं[10] च वेदानुवचनपाठात् एतदवगम्यते – एवं श्रौत-

1. 'अस्मि' इत्यनुवृत्तिर्नाश्रयणीया ॥

2. 'सर्वज्ञत्वलक्षणा' इति वा॥

3. 'संसारस्थित्युत्पत्तिसंहार' इति वा॥ ; कौशलं चेदं कूटस्थचैतन्यस्वरूपेण स्थितस्यैव मायया संसारस्थित्यादिहेतुत्वम् ॥

4. अक्षितः इत्यस्यैव अर्थः, अक्षत इति । 'उक्षितो वा' इति वा॥ पाठे अकारस्थाने उकारः प्रमादतः स्यात् क्षिप्तः ॥

5. अमृतोक्षित इति समस्तपाठं स्वीकृत्येदं व्याख्यानम् ॥

6. कर्मानुष्ठानात् चित्तशुद्धिमवाप्य ब्रह्मज्ञानद्वारा ब्रह्मभूतस्येत्यर्थः ॥

7. वामदेवस्य वेदानुवचनं ऐतरेयोपनिषदि (२-४), बृहदारण्यके च (१-४-१०) श्रूयते ॥

8. प्रातिभेन (ज्ञानेन) ॥

9. न तु अदृष्टफलार्थः । मन्त्रार्थपर्यालोचनात् फलान्तरासंकीर्तनाच्चैतदवगम्यते इत्यभिप्रायः । अहं वृक्षस्येति मन्त्रस्य ऋषिस्त्रिशङ्कुः, पङ्क्तिश्छन्दः, परमात्मा देवता ; ब्रह्मविद्यार्थे जपे विनियोगः । ऋष्यादिस्मरणपूर्वकं जपः कर्तव्य इति सूचनाय ऋषिनामोल्लेखः कृतः । 'अधिगम्यते' इति वा॥

10. 'धर्मोपन्यासात्' इति (वा॥) पाठापेक्षया कर्मेत्येव गृहीतं वरम् । वाक्यशेषे कर्मशब्दस्यैव ग्रहणात् ॥

स्मार्तेषु नित्येषु कर्मसु युक्तस्य निष्कामस्य, परं ब्रह्म विविदिषोः, आर्षाणि दर्शनानि प्रादुर्भवन्त्यात्मादिविषयाणि[1] इति ॥ १० ॥

## ११. विद्योत्पत्त्यर्थमनुष्ठेयानि कर्माणि

वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकꣳ सुचरितानि । तानि त्वयोपास्यानि । नो इतराणि । ये केचास्मच्छ्रेयाꣳसो ब्राह्मणाः ।

1. अत्र 'आत्मादिविषयाण्यार्षाणि दर्शनानि भवन्ति' इति वचनात् उपदेशं विनापि कर्मानुष्ठानबलादात्मज्ञानमपि केषाञ्चित् अतिविशुद्धकार्यकरणानां पुरुषधौरेयाणामुत्पद्यत एवेत्याचार्यमतमिति गम्यते । न तु केवलमात्मविविदिषायामेव पर्यवस्यन्ति कर्माणि यथाहुः केचिदिति । द्रष्टव्यं बृ. भा. १-४-२.

तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ॥ ११ ॥

सत्यादिकर्तव्योपदेशप्रयोजनम् –

५३. 'वेदमनूच्य' इत्येवमादिकर्तव्योपदेशारम्भः[1] प्राग् ब्रह्मविज्ञानात् नियमेन कर्तव्यानि श्रौतस्मार्तकर्माणि इत्येवमर्थः । अनुशासनश्रुतेः पुरुषसंस्कारार्थत्वात्[2] । संस्कृतस्य हि विशुद्धसत्त्वस्य आत्मज्ञानम्

1. 'कर्तव्यतोपदेशारम्भः' इति मुद्रितपाठ एवं परिवर्तितः ॥

2. 'अनुशास्ति' इति विद्याप्रकरणे विधानात् मुमुक्षोः संस्कारार्थत्वं कर्मणामित्यवगम्यते । केवलकर्मविधानस्यात्राप्रकृतत्वात् ॥

अञ्जसैव[1] उत्पद्यते 'तपसा कल्मषं हन्ति विद्ययामृतमश्नुते' (मनु. १२-१०४) इति हि स्मृतिः[2] । वक्ष्यति च 'तपसा ब्रह्म विजिज्ञासस्व' (३-१) इति[3] । अतो विद्योत्पत्त्यर्थम् अनुष्ठेयानि कर्माणि । 'अनुशास्ति' इत्यनुशासनशब्दात् । अनुशासनातिक्रमे हि दोषोत्पत्तिः[4] । प्रागुपन्यासाच्च कर्मणाम् । केवलब्रह्मविद्यारम्भाच्च पूर्वं कर्माण्युपन्यस्तानि । उदितायां च[5] विद्यायाम्[6] 'अभयं प्रतिष्ठां विन्दते' (२-७), 'न बिभेति कुतश्चन' (२-९), 'किमहं साधु नाकरवम्' (२-९) इत्येवमादिना[7] कर्मनैष्किञ्चन्यं दर्शयिष्यतीत्यतोऽवगम्यते[8] पूर्वोपचितदुरितक्षयद्वारेण विद्योत्पत्त्यर्थानि कर्माणीति । मन्त्रवर्णाच्च । 'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' (ई. मा. १४) इति[9] ॥

1. अप्रतिबन्धेन – इत्यर्थः ॥

2. कर्मणां संस्कारद्वारा विद्योत्पत्त्यर्थमुक्तस्मृतेरवगम्यत इत्यभिप्रायः । 'तपो विद्या च विप्रस्य निःश्रेयसकरं परम्' इति हि पूर्वार्धम् ॥

3. भृगुवल्ल्यां तु भाष्ये तपःशब्दो बाह्यान्तःकरणसमाधानार्थकत्वेन व्याख्यातः । तच्च समाधानं स्वधर्माचरणेनैव सम्यगनुष्ठितेन सिध्यतीत्यभिप्रायेण स्यात्तद्वाक्योदाहरणमत्र ॥

4. अतो नियमेन कर्तव्यानि ॥

5. उदितायां तु इति त्वर्थे चः ॥

6. 'ब्रह्मविद्यायाम्' इति वा॥

7. इत्यादिना इति वा॥

8. विद्योत्पत्त्यर्थमेव न तु फलप्राप्तौ विद्यासहकारित्वेनापीत्येतत्कथमवगम्यत इत्यत आह – उदितायां विद्यायां कर्मनैष्किञ्चन्यं दर्शयिष्यति इत्यतः इति ॥

9. इयं हि माध्यन्दिनश्रुतिः केवलविद्यैवामृतत्वसाधनमिति ब्रवीति । अत्र हि देवतादर्शनकर्मसमुच्चयस्य साध्यसाधनैषणाद्वयलक्षणस्य मृत्योरतितरणार्थत्वमुक्त्वा, तन्नान्तरीयकतयोत्पन्नया विद्यया अमृतत्वमश्नुते इति कीर्तितम् । अतो मृत्य्वतितरणद्वारेण विद्योत्पत्त्यर्थत्वं कर्मणामिति गम्यत इति भावः ॥ ब्र. मी. का. भा. ३-२५.

द्विः कर्मोपदेशप्रयोजनम् --

५४. ऋतादीनां पूर्वत्रोपदेश आनर्थक्यपरिहारार्थः[1]। इह तु ज्ञानोत्पत्त्यर्थत्वात् कर्तव्यतानियमार्थः[2]॥

सत्यादीन्यनुष्ठेयानि –

५५. वेदम्[3] अनूच्य अध्याप्य आचार्यः अन्तेवासिनं शिष्यं अनुशास्ति[4] ग्रन्थग्रहणात् अनु पश्चात् शास्ति तदर्थं ग्राहयति इत्यर्थः। अतोऽवगम्यते अधीतवेदस्य[5] धर्मजिज्ञासाम् अकृत्वा गुरुकुलान्न समावर्तितव्यम्[6] इति। 'बुद्ध्वा[7] कर्माणि चारभेत्[8]' (?) इति स्मृतेश्च॥

कथम् अनुशास्तीति? आह[9]। सत्यं वद यथाप्रमाणावगतं वक्तव्यं[10] तद्वद। तद्वत् धर्मं चर। धर्मः इत्यनुष्ठेयानां सामान्यवचनम्। सत्यादिविशेषनिर्देशात्[11]। स्वाध्यायात् अध्ययनात् मा प्रमदः प्रमादं मा कार्षीः। आचार्याय आचार्यार्थं प्रियम् इष्टं धनम् आहृत्य आनीय

1. अपरविद्यासहकारित्वेनापि सार्थक्यं वक्तुं ऋतं चेत्याद्युपदेश इत्यर्थः॥

2. इह पुनर्विद्याया उत्पत्त्यर्थं नियमेन कर्तव्यानि कर्माणीत्युपदिश्यन्ते। न तु विद्यासहकारित्वेन ✱ विद्याया अविधेयत्वात्, विद्याफलस्य च असाध्यत्वात्, विद्याकर्मणोर्विरोधाच्चेत्यर्थः॥ छां. भा. ८-१५-१, सू. भा. ३-४-१३, ३-४-१६.

3. वेदमित्येकवचनं न निर्भरः। एकं स्वशाखामात्रं द्वौ त्रीन् चतुरो वा साङ्गोपाङ्गानित्यर्थो द्रष्टव्यः॥

4. अनुशासनं कुर्यात्॥

5. अत्र षष्ठ्यन्तस्यास्य कुत्रान्वय इति नावगम्यते। तृतीयान्तेनैवानेन भाव्यमिति भाति। न च पाठान्तरमुपलभ्यते। अत्र सुधिय एव प्रमाणम्॥

6. 'वेदमधीत्य स्नायात्' (बौ. गृ. ६-१) इति स्मृतिरेतदानुगुण्येन नेया इत्यभिप्रायः॥ शा. भा. १-१-१.

7. वेदार्थं बुद्ध्वा इत्यर्थः॥

8. कुर्वीत वा॥

9. 'अत आह' वा॥

10. 'वक्तव्यं च' वा॥ 'तत्' इति च नास्ति तत्र॥

11. सत्यादीनामप्यनुष्ठेयत्वेनैवोपदेशात्, विशेषेणानिर्दिष्टानुष्ठेयसामान्यमिह धर्मशब्देनोच्यत इति गम्यत इत्यभिप्रायः॥

दत्त्वा विद्यानिष्क्रयार्थम्, आचार्येण चानुज्ञातोऽनुरूपान् दारान् आहृत्य, प्रजातन्तुं प्रजासंतानं मा व्यवच्छेत्सीः । प्रजासन्ततेर्विच्छित्तिर्न कर्तव्या; अनुत्पद्यमानेऽपि पुत्रे पुत्रकाम्यादिकर्मणा तदुत्पत्तौ यत्नः कर्तव्य इत्यभिप्रायः । प्रजाप्रजन[1]प्रजातित्रयनिर्देशसामर्थ्यात् । अन्यथा[2] 'प्रजनश्च' इत्येतदेकमेव[3] अवक्ष्यत्[4] । सत्यात् न प्रमदितव्यम् प्रमादो न कर्तव्यः । सत्याच्च प्रमदनम् अनृतप्रसङ्गः । प्रमादशब्दसामर्थ्यात् विस्मृत्यपि अनृतं न वक्तव्यम् इत्यर्थः[5] । अन्यथा असत्यवदनप्रतिषेध एव स्यात्[6] । धर्मान्न प्रमदितव्यम् । धर्मशब्दस्य अनुष्ठेयविषयत्वात्[7] अननुष्ठानं प्रमादः । स न कर्तव्यः । अनुष्ठातव्य एव धर्म इति यावत् । एवं कुशलात् आत्मरक्षणार्थात्कर्मणो न प्रमदितव्यम् । भूतिः विभूतिः । तस्यै भूत्यै भूत्यर्थात् मङ्गलयुक्तात्[8] कर्मणः न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । स्वाध्यायः अध्ययनम्, प्रवचनम् अध्यापनम्; ताभ्यां न प्रमदितव्यम्[9] । ते हि[10] नियमेन कर्तव्ये इत्यर्थः । तथा देवपितृकार्याभ्यां न प्रमदितव्यम् । दैवपित्र्ये कर्मणी कर्तव्ये ।

1. वा॥ पाठोऽयम् । आ॥ पाठे तु 'प्रजाप्रजनन' इति वर्तते । एवं 'प्रजनश्च' इत्युत्तरत्रापि । तत्र तु चशब्दादानसामर्थ्यादवगम्यते भाष्ये श्रुतिमूलमेवानुसृतमितीत्यतो 'प्रजन' इत्येव धृतोऽस्माभिः ॥

2. केवललौकिकप्रयत्नस्यैव विवक्षितत्वे ॥

3. 'इत्येतावदेव' इति पाठान्तरम् ॥

4. ऋतं चेत्यनुवाके इति शेषः ॥

5. इतोऽनन्तरम् "अनृतवदनविषये दोषश्रुतेश्च 'योऽनृतं वदति समूलो वा एष परिशुष्यति' इति । 'न सत्यात्परमो धर्मो नानृतात्पातकं परम्' इति स्मृतेः" इत्यधिकं क्वचित् ॥　6. नानृतत्यागे प्रयत्नो विहितः स्यादिति भावः ॥

7. 'अनुष्ठेयविशेषविषयत्वात्' इति (वा॥) पाठे विशेषशब्दोऽनपेक्षितः ॥

8. भूत्यै इति पञ्चम्यर्थे प्रयोग इति भावः ॥

9. 'स्वाध्यायः' इत्याद्येतदन्तो भागो नास्ति वा ॥

10. 'तद्धि तपः' (अनु॰ ९) इत्यवधारणस्मारणार्थो हिशब्दः ॥

मातृदेवः । माता देवः यस्य स त्वं मातृदेवः भव स्याः । एवं पितृदेवः[1], आचार्यदेवः, अतिथिदेवः भव । देवतावत् उपास्या एते इत्यर्थः ॥

यान्यपि च अन्यानि अनवद्यानि अनिन्दितानि शिष्टाचारलक्षणानि कर्माणि । तानि सेवितव्यानि कर्तव्यानि त्वया । नो न कर्तव्यानि[2] । इतराणि सावद्यानि शिष्टकृतान्यपि[3] । यानि अस्माकम् आचार्याणां सुचरितानि शोभनचरितानि आम्नायाद्यविरुद्धानि तान्येव त्वया उपास्यानि अदृष्टार्थानि अनुष्ठेयानि । नियमेन कर्तव्यानि इति यावत्[4] । नो इतराणि विपरीतानि, आचार्यकृतान्यपि[5] ॥

## गुरुजनेषु कर्तव्यम् --

५६. ये के च अविशेषिताः[6] आचार्यत्वादिधर्मैः अस्मत् अस्मत्तः श्रेयांसः प्रशस्यतराः[7] -- ते च ब्राह्मणाः[8] न क्षत्रियादयः--तेषाम् आसनेन आसनदानादिना त्वया प्रश्वसितव्यम् । प्रश्वसनं प्रश्वासः श्रमापनयः । तेषां श्रमस्त्वया अपनेतव्य इत्यर्थः । तेषां वा[9] आसने

1. पितृदेवो भव, आचार्यदेवो भव - इति भवशब्दाभ्यासो वा ॥

2. 'अकर्तव्यानि' इति आ॥ ; अत्र घतस्तु वा॥ पाठः ॥

3. विस्मृत्येति शेषः । न हि शिष्टाः सावद्यं कर्म ज्ञात्वा कुर्युः । अथवा विशिष्टसंनिवेशे महार्यार्यैः कृतान्यपि शिष्टाचारत्वेन स्वीकृत्य नानुकरणीयानीत्यर्थः । यथा जामदग्न्यः पितुराज्ञया स्वजननीं जघान, शुनःशेफो मातापित्रोरभिप्रायं बद्ध्वा जननीजनकौ तत्याज इत्यादीनि कर्माणि नानुकरणीयानीत्यर्थः ॥ 4. इत्येतत् वा॥

5. शास्त्रनिषिद्धत्वेनावगतान्यपि सदाचारत्वेन न स्वीकर्तव्यानीत्यर्थः । अत्र पूर्वमीमांसागतं स्मृत्याचारप्रामाण्याधिकरणं सभाष्यवार्तिकं परिशीलयितव्यम् ॥

6. 'विशेषिताः' इति मुद्रितपाठे तु 'धर्मैः' इत्युत्तरेणान्वयः । ततो वरं 'अविशेषिताः' इत्येव स्वीकृतम् ॥

7. 'प्रशस्ततराः' वा॥ ; शास्त्राध्ययनादिना इति शेषः ॥

8. यद्यपि क्षत्रियादयोऽपि योग्याः संभावनीया एव, ब्राह्मणेषु तु गौरवातिशयः समादरणीय इति बोधनार्थं ब्राह्मणग्रहणम् ॥

9. 'च' इति आ॥

गोष्ठीनिमित्ते समुदिते तेषु[1] न प्रश्वसितव्यं प्रश्वासोऽपि न कर्तव्यः। केवलं तदुक्तसारग्राहिणा भवितव्यम् ॥

## दानस्यावश्यकर्तव्यता –

५७. किञ्च यत्किञ्चिद् देयं तच्छ्रद्धयैव दातव्यम्। अश्रद्धया अदेयं न दातव्यम्[2]। श्रिया विभूत्या देयं दातव्यम्। ह्रिया लज्जया च देयम्। भिया भीत्या च[3] देयम्। संविदा च। संवित् मित्रादिकार्यम्[4] ॥

## अनुष्ठानविषयकसंशये शिष्टाचारः प्रमाणम् –

५८. अथैवं वर्तमानस्य यदि कदाचित् ते तव श्रौते स्मार्ते वा कर्मणि वृत्ते वा आचारलक्षणे विचिकित्सा संशयः स्यात्[5]। ये तत्र तस्मिन् देशे काले वा ब्राह्मणाः तत्र कर्मादौ 'युक्ताः' इति व्यवहितेन सम्बन्धः कर्तव्यः। संमर्शिनः विचारक्षमाः। युक्ता अभियुक्ताः कर्मणि वृत्ते वा[6]। आयुक्ताः अपरप्रयुक्ताः[7]। अलूक्षाः अरूक्षाः अक्रूरमतयः। धर्मकामाः अदृष्टार्थिनः। अकामहता इत्येतत्। स्युः भवेयुः। ते ब्राह्मणाः[8] यथा येन प्रकारेण तत्र तस्मिन् कर्मणि वृत्ते वा वर्तेरन् तथा त्वमपि वर्तेथाः ॥

1. तेषाम् आस्थायिकायां सत्यां संभ्रमात्किञ्चिदपि न वक्तव्यम् इत्यर्थः। एतच्च 'आसने न प्रश्वसितव्यम्' इति सप्तमीपाठमासनशब्दस्य गृहीत्वा। आसनेन इति तृतीयामादाय तु प्रथमं व्याख्यानम्। अत एव 'तेषां वा' इति पाठो गरीयान् चयुक्तात् ॥ 2. गी. १७–२८.

3. 'भिया च भयेन' इति आ॥

4. 'संविदा च मैत्र्यादिकार्येण देयम्' इति वा॥; सात्त्विकदानवर्णनं (गी. १७–२०) गीतादिस्मृतेरधिगन्तव्यम् ॥

5. स्याच्चेत्। 'स्यात् भवेत्' इति च पाठान्तरे ॥

6. ये ब्राह्मणाः संमर्शिनः, तत्र युक्ता अभियुक्ताः इत्यन्वयप्रदर्शनमेतत् ॥

7. आयुक्ताः इत्येतत् 'अयुक्ताः' इत्यस्यैव रूपान्तरम् इति भावः ॥

8. 'ब्राह्मणा' इति नास्ति आ॥

अथ अभ्याख्यातेषु । अभ्याख्याताः[1] अभ्युक्ताः । दोषेण संदिह्यमानेन संयोजिताः केनचित् । तेषु च यथोक्तं सर्वम् उपनयेत् 'ये तत्र' इत्यादि[2] ॥

**उपसंहारः**

५९. एष आदेशः विधिः । एष उपदेशः पुत्रादिभ्यः पित्रादीनाम् । एषा वेदोपनिषत् वेदरहस्यम् । वेदार्थ[3] इत्येतत् । एतदेव[4] अनुशासनम् ईश्वरवचनम् । आदेशवाच्यस्य[5] विधेरुक्तत्वात् । सर्वेषां वा प्रमाणभूतानाम् अनुशासनमेतत् । यस्मादेवम् तस्मात् एवं यथोक्तं सर्वम् उपासितव्यं कर्तव्यम् । एवम् उ च एतदुपास्यम् । उपास्यमेव चैतत् , न अनुपास्यम् इति आदरार्थं पुनर्वचनम् ॥ ११ ॥

## परमपुरुषार्थसाधनविषये चिन्ता

**चिन्ताविषयः** –

६०. अत्रैतच्चिन्त्यते[6] विद्याकर्मणोर्विवेकार्थम् । किं कर्मभ्य एव केवलेभ्यः परं श्रेयः, उत विद्यासव्यपेक्षेभ्यः[7], आहोस्वित् विद्या-

1. 'अभ्याख्याताः' इत्येतत् त्यक्तम् आ॥

2. तेषु च संदिह्यमानदोषेण संयोजितेषु सर्वमेतत्पूर्वोक्तं उपनीय संबन्धनीयम् – ये तत्र तेषु अभियुक्ताः । अपरप्रयुक्ताः, अक्रूरमतयः, केवलं धर्मदृष्टय ब्राह्मणाः स्युः ते यथा वर्तेरन् त्वमपि तथैव वर्तेथा इतीत्यर्थः ॥

3. वेदोपदिष्टार्थसार इत्यर्थः ॥

4. एतच्छब्दाभ्यासलब्धमवधारणम् ॥

5. वा॥ पाठोऽयम् । 'आदेशवाक्यस्य' इति आ॥ ; एष आदेशः इति वाक्येन विधेरुक्तत्वात् अपुनरुक्ततायै 'ईश्वरवचनम्' इति अनुशासनशब्दो व्याख्येय इत्यर्थः ॥

6. यद्यपि अवतरणिकाभाष्ये एव (भा॰ भा॰ २) केवलकर्मणः, विद्यासहितकर्मणश्च निःश्रेयसहेतुत्वं निराकृत्य विद्यया कर्मोपादानहेतुपरिहारादेव मोक्ष इति प्रतिष्ठापितम् ; तथापि शीक्षावल्ल्यां बहुशो विद्याविधानात् विज्ञानात्स्वाराज्यप्राप्तिश्रवणात्, 'ऋतं च', 'धर्मं चर' इत्यादिना भूयो भूयः कर्मविधानाच्च केवला विद्या नालं परप्राप्तये इति शङ्का स्यात्कस्यचिदितीह पुनरपि वितत्य चिन्त्यते ॥

7. प्रधानभूतेभ्यः कर्मभ्यः अङ्गभूतविद्यासहितेभ्यः ॥

कर्मभ्यां संहताभ्याम्[1], विद्याया वा कर्मापेक्षायाः[2], उत केवलाया[3] एव विद्याया इति ॥

## केवलेभ्यः कर्मभ्यो न निःश्रेयसम् –

६१. तत्र केवलेभ्य एव कर्मभ्यः स्यात् । समस्तवेदार्थज्ञानवतः कर्माधिकारात्[4] । 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' (मनु. २–१६५) इति स्मरणात्[5] । अधिगमश्च सहोपनिषदर्थेन आत्मज्ञानादिना[6] । 'विद्वान् यजते', 'विद्वान् याजयति' इति च विदुष एव कर्मण्यधिकारः प्रदर्श्यते सर्वत्र[7] । 'ज्ञात्वा चानुष्ठानम्' (?) इति च । कृत्स्नश्च वेदः कर्मार्थ इति हि मन्यन्ते केचित्[8] । कर्मभ्यश्चेत् परं श्रेयो नावाप्यते, वेदोऽनर्थकः[9] स्यात् ॥

न । नित्यत्वान्मोक्षस्य । नित्यो हि मोक्ष इष्यते । कर्मकार्यस्य चानित्यत्वं प्रसिद्धं लोके । कर्मभ्यश्चेत् श्रेयः, अनित्यं स्यात् । तच्चानिष्टम् । 'तद्यथेह कर्मचितो लोकः क्षीयते' (छां. ८–१–६) इति न्यायानुगृहीतश्रुतिविरोधात्[10] । ननु[11] काम्यप्रतिषिद्धयोरनारम्भात्,

---

1. समप्रधानाभ्याम् ॥ 2. प्रधानभूताया विद्यायाः कर्मसहितायाः ॥
3. इतरनिरपेक्षायाः ॥ 4. सू. भा. ३–४–६.
5. न केवलं छान्दोग्यादि (८-१५-१) श्रुतयः स्मृतयश्चैवं वदन्तीति भावः॥
6. ननु स्मृतौ रहस्याधिगममात्रमुदितं नात्मज्ञानमपीति शङ्कायामाह 'अधिगमश्च' इति 'आदिना' इति देवतादिज्ञानं गृह्यते ॥
7. कर्मप्रस्तावे तत्र तत्रैवं श्रूयते । तच्च गमकं कर्मणा सकलवेदार्थज्ञानमपेक्षितमित्यत्र । आत्मज्ञानमपि कर्तृसंस्कारकतयापेक्ष्यते इति भावः ॥
8. कर्ममीमांसकाः । अत्र (सू. भा. १–१–४) समन्वयसूत्रभाष्ये प्रथमः पूर्वपक्षोऽनुसंधेयः ॥ 9. व्यर्थ एव स्यात् । अर्थान्तराभावाद्वेदस्येत्यर्थः ॥
10. एतद्वाक्यं चा॥ पाठे नास्ति । नान्वेति च पूर्ववाक्येन अञ्जसा । न हि श्रुतिविरोधात् अनिष्टत्वं साध्यते, अनित्यत्वं वेति । अथवा 'न चारभ्योऽपि नित्यः स्यादिति शङ्कनीयम्' इत्यर्थकं वाक्यमेतस्मात्प्राक् स्थितं त्रुटितं स्यादिति कल्पनीयम् । एतदुदाहरणसामर्थ्यात् ॥ 11. 'ननु' इति आ॥ पाठे न विद्यते ॥

आरब्धस्य च कर्मणः उपभोगेन[1] क्षयात्, नित्यानुष्ठानाच्च प्रत्यवायानुत्पत्तेः, ज्ञाननिरपेक्ष एव मोक्षः[2]--इति चेत्। तच्च न। कर्मशेषसंभवात्[3] तन्निमित्तं[4] शरीरान्तरोत्पत्तिः प्राप्नोतीति प्रत्युक्तम्[5]। कर्मशेषस्य च नित्यानुष्ठानेनाविरोधात् क्षयानुपपत्तिरिति च[6]॥

यदुक्तं 'समस्तवेदार्थज्ञानवतः कर्माधिकारात्' इत्यादि। तच्च न। श्रुतज्ञानव्यतिरेकादुपासनस्य। श्रुतज्ञानमात्रेण हि कर्मण्यधिक्रियते, नोपासनम्[7] अपेक्षते[8]। उपासनं च श्रुतज्ञानादर्थान्तरं विधीयते[9] मोक्षफलम्[10]। अर्थान्तरप्रसिद्धिश्च[11] स्यात्। श्रोतव्य इत्युक्त्वा

1. 'उपभोगेनैव' वा॥

2. न ह्यारभ्यो मोक्षः इष्यतेऽस्माभिः। येन तस्यानित्यत्वं प्रसज्येत; आत्मन्यवस्थानमेव तु मोक्ष उपवर्णितविधया कर्मद्वारेणावाप्यत इत्यस्माकं मतमिति भावः॥ 3. 'शेषकर्मसंभवात्' आ॥ 4. 'तन्निमित्ता' इति वा॥ पाठः॥

5. एतत् इति शेषः। अवतरणिकायां हि (भा. भा. ३) एतत्प्रत्युक्तम्॥

6. एतदपि तत्रैव (भा. भा. ४) प्रोक्तम्। इह पुनरन्वारम्भणेन तदुच्यते समस्तवेदार्थज्ञानवतः कर्माधिकार इति पक्षनिरासार्थम्। एवं च यदि कृत्स्नोऽपि वेदः कर्मार्थ एवेतीष्यते, तर्हि वेदार्थज्ञानं नालं मोक्षाधिगमायेत्यनिष्टमापतेत्, मोक्षवादिनीनां श्रुतीनामप्रामाण्यं चेत्यभिप्रायः॥

7. 'नोपासनाम्' इति पाठान्तरम्। 'नोपासनज्ञानम्' इति (वा॥) पाठे 'ज्ञानम्' इत्यधिकम्॥

8. छान्दोग्ये 'वेदमधीत्य' (छां. ८-१५-१) इत्यध्ययनमात्रश्रवणात् अध्ययनमात्रवत एव कर्मविधिः। तथा च यद्यपि कर्मावबोधनमधिकारकारणं भवेत्, तथापि औपनिषदमुपासनमपि तत्र नापेक्ष्यते इति भावः। सू. भा. ३-४-१२.

9. उपासनं च न केवलं भावनात्मकं सगुणब्रह्मणः, किन्तु परब्रह्मणो निदिध्यासनात्मकमपि। तच्च दर्शनपर्यवसायित्वात् यावद्दर्शनं कर्तव्यमिति विहितमिति सू. भा. ४-१-१। अपरायत्तबोध एव निदिध्यासनम् इति तु वार्तिकप्रस्थानम्॥ बृ. वा. २-४-२१७....२२४.

10. मोक्षफलम् इति उपासनस्यैव विशेषणम्॥

11. 'अर्थान्तरप्रसिद्धम्' इति आ॥ 'अर्थान्तरप्रसिद्धेश्च' इति वा॥; तदुभयमपि परित्यज्य 'अर्थान्तरप्रसिद्धिश्च' इति पाठ आदृतः। उत्तरत्र अर्थान्तरत्वमेव हि साध्यत इति॥

तद्व्यतिरेकेण 'मन्तव्यो निदिध्यासितव्यः' (बृ. २-४-५) इति यत्नान्तरविधानात्[1] मनननिदिध्यासनयोश्च प्रसिद्धं श्रवणज्ञानादर्थान्तरत्वम्[2] ॥

## विद्यासव्यपेक्षकर्मभ्योऽपि न मोक्षः –

६२. एवं तर्हि विद्यासव्यपेक्षेभ्यः कर्मभ्यः स्यान्मोक्षः । विद्यासहितानां च कर्मणां भवेत् कार्यान्तरारम्भसामर्थ्यम् । यथा स्वतो मरणज्वरादिकार्यारम्भसामर्थ्यानामपि[3] विषदध्यादीनां मन्त्रशर्करादिसंयुक्तानां कार्यान्तरारम्भसामर्थ्यम्[4] एवं विद्यासहितैः कर्मभिर्मोक्ष आरभ्यते इति चेत् । आरभ्यस्यानित्यत्वात् इत्युक्तो दोषः । वचनात् आरभ्योऽपि नित्य एवेति चेत्[5] । न । ज्ञापकत्वाद्वचनस्य । वचनं नाम यथाभूतस्यार्थस्य ज्ञापकं नाविद्यमानस्य[6] कर्तृ । न हि वचनशतेनापि नित्यमारभ्यते आरब्धं वा अविनाशि भवेत्[7] ॥

---

1. यदा उपासनमेव श्रुतज्ञानादर्थान्तरम् किमु वक्तव्यं तत्फलं दर्शनं नापेक्षितं कर्माधिकारे इतीति भावः ॥

2. एतच्चाऽऽत्मवाक्यश्रवणं कर्माधिकाराङ्गमित्यभ्युपगम्योक्तम् । वस्तुतस्तु आत्मज्ञानार्थं विहितस्य श्रवणस्यैव कर्माधिकारकारणत्वं न युक्तम् तत्रानुपयोगात् । अध्ययनमात्रवत एवोक्तन्यायेनाधिकारसंभवात् ॥

3. 'समर्थानामपि' इति वा ॥

4. अन्यत्राप्यानीतोऽयं दृष्टान्तः । द्रष्टव्यम् सू. भा. ४-१-१६, बृ. भा. ३-३, (संबन्धभाष्यम्) ॥

5. 'न च पुनरावर्तते' (छां. ४-१५-१) इति श्रुतिवचनबलात् कर्मारब्धोऽपि नित्यः स्यात् इति शङ्कितुराशयः ॥

6. 'विद्यमानस्य कर्तृ' इति आ॥ पाठोऽसाधुः । अत्र ध्वतरतु घा॥ पाठः । वचनं ज्ञापकमेव न कारकमिति प्र. भा. ६-२, बृ. भा. २-१-२०, ३-९ (उपसंहारभाष्यम्), ४-३-२३ – इति भाष्येपूद्घोषितम् ॥

7. न हि अयुक्तमपि ज्ञापयेत् वचनम् । अप्रामाण्यप्रसङ्गात् । अतोऽनावृत्तिवचनमन्यथैव नेयमिति भावः ॥

ज्ञानकर्मणोः समप्राधान्येन समुच्चितयोरपि न मोक्षहेतुता –

६३. एतेन विद्याकर्मणोः संहतयोर्मोक्षारम्भकत्वं प्रत्युक्तम्। विद्याकर्मणी मोक्षप्रतिबन्धहेतुनिवर्तके इति चेत्[1]। न। कर्मणः फलान्तरदर्शनात्। उत्पत्तिसंस्कारविकाराप्तयो[2] हि फलं कर्मणो दृश्यते। उत्पत्त्यादिफलविपरीतश्च मोक्षः[3]॥

गतिश्रुतेराप्य इति चेत्। 'सूर्यद्वारेण'[4] (मुं १–२–११), 'तयोर्ध्वमायन्'(का. २–३–१६, छां. ८–६–६) इत्येवमादिगतिश्रुतिभ्यः प्राप्यो मोक्ष इति चेत्। न सर्वगतत्वात्, गन्तृभिश्च अनन्यत्वात्। आकाशादिकारणत्वात्[5] सर्वगतं ब्रह्म; ब्रह्माव्यतिरिक्ताश्च सर्वे विज्ञानात्मानः। अतो नाप्यो मोक्षः। गन्तुरन्यद् विभिन्नदेशं च[6] भवति गन्तव्यम्। न हि येनैवाव्यतिरिक्तं यत्, तत् तेनैव

1. तथा च नानित्यत्वं मोक्षस्य प्रसज्यतीति भावः॥

2. 'उत्पत्तिविकारसंस्काराप्तयो हि' इति वा॥; उत्पत्त्यादिचतुष्टयमेव कर्मकार्यमिति न्यायो भाष्यान्तरेऽप्यानीतः। द्रष्टव्यम् सू. १–१–४, बृ. ३–३ संबन्धभाष्यम्॥

3 नित्यसिद्धत्वात्, मोक्षोत्पत्त्यादिप्रतिपादकप्रमाणाभवाच्चेति भावः। न च केवलं प्रतिबन्धनिवर्तनेन अभिव्यञ्जकत्वं कर्मणः क्वचिद् दृष्टम्। अतो न तन्मोक्षसाधनमङ्गीकरणीयमित्यभिप्रायः॥

4. सङ्ग्रहशङ्काग्रन्थस्य विवरणं क्रियते सूर्यद्वारेणेत्यादिना 'चेत्' इत्यन्तेन। 'सेन्द्रयोनिः' – इति षष्ठानुवाके श्रूयते। प्र. ३–७ – इत्यादिस्थलेषु च मोक्षमार्ग उपदिष्टः। अतः प्राप्यो मोक्ष इति पूर्वपक्ष्याशयः॥

5. संग्रहवाक्यं विवृणोति 'आकाशादिकारणत्वात्' इत्यादिना 'इत्येवमादिश्रुतिशतेभ्यः' इत्यन्तेन। कालाकाशयोरपि कारणत्वात्, तद्ब्रह्म न कालादिना व्यवहितमिति भावः॥ सू. भा. १–१–४, ४–३–१४.

6. 'विभिन्नं देशम्' इति चकाररहितात् अयमेव पाठः साधीयान्। 'देशं प्रति' इति (आ॥) पाठे प्रतीत्यधिकम्। प्राप्यत्वे हेतुद्वयमुपन्यस्तम् सर्वगतत्वम् अनन्यत्वं च। तत्र सर्वगतत्वमुपपाद्य, अनन्यत्वमुपपादयितुमारभते गन्तुरन्यदित्यादिना। चैत्रादन्यो विभिन्नदेशश्च प्राप्यो ग्रामः, ब्रह्म तु विज्ञानात्मनो नान्यत्, विभिन्नदेशं चेत्यर्थः। सू. भा. ४–३–१४। एकदेशस्थयोर्न परस्पर-प्राप्यत्वं यथा द्रव्यगुणयोः। अत आह विभिन्नदेशं चेति। 'विभिन्नं च देशम्' इत्यतो वरं विभिन्नदेशं चेत्येव॥

गम्यते[1] । अनन्यत्वप्रसिद्धिश्च[2] 'तत् सृष्ट्वा तदेवानुप्राविशत्' (२-७), 'क्षेत्रज्ञं चापि मां विद्धि' (गी. १३-२)[3] इत्येवमादिश्रुतिस्मृतिशतेभ्यः । गत्यैश्वर्यादिश्रुतिविरोधः[4] इति चेत् । अथापि[5] स्यात्, अप्राप्यो मोक्षः, तदा गतिश्रुतीनाम् 'स एकधा' (छां. ७-२६-२), 'स यदि पितृलोककामः' (छां. ८-२-१), 'स्त्रीभिर्वा यानैर्वा' (छां. ८-१२-३) इत्यादिश्रुतीनां च कोपः स्यात् इति चेत् । न । कार्यब्रह्मविषयत्वात् तासाम् । कार्ये हि ब्रह्मणि स्त्र्यादयः स्युः, न कारणे[6] । 'एकमेवाद्वितीयम्' (छां. ६-२-१), 'यत्र नान्यत् पश्यति' (छां. ७-२४-१), 'तत् केन कं पश्येत्' (बृ. २-४-१४) इत्यादिश्रुतिभ्यः[7] ॥

---

1. 'गम्यते तत्' इति आ॥ पाठे 'तत्' इत्यनाकाङ्क्षितम् ॥

2. अनन्यत्वसिद्धिरेव कथम् इत्यत आह 'अनन्यत्वप्रसिद्धिश्च' इति । 'अनन्यत्वप्रसिद्धेश्च' आ॥, 'तदनन्यत्वसिद्धिश्च' वा॥ – इत्यतोऽयमेव वरीयान् ॥

3. द्रष्टव्यमुदाहृतश्रुतिस्मृतिभाष्यं यत्र विस्तरेणैतच्चिन्तितम् ॥

4. अत्र आदिशब्देन यद्यपि नदीसमुद्रदृष्टान्तश्रुतयः, सृष्टिश्रुतयश्च ग्रहीतुं शक्यन्ते तथापि भाष्ये विवरणवाक्ये न गृहीतास्ताः ॥

5. गत्यैश्वर्यादीतिसंग्रहवाक्यं विवृणोति 'अथापि' इत्यादिना 'चेत्' इत्यन्तेन ॥

6. एकमेव ब्रह्म कारणं कार्यं चेति द्वेधा स्थितमुपाधिवशात् । कार्यं ब्रह्म, अपरं ब्रह्म, सगुणं ब्रह्म, सविशेषं ब्रह्म – इति पर्यायाः । हिरण्यगर्भस्य नामान्येतानि । एतदेवोपास्यं ब्रह्म सूत्रभाष्ये (१-१-१२, ४-३-७, ४-३-१४) अर्चिरादिमार्गेण गन्तव्यमिति वर्णितम् । कारणं ब्रह्म, परं ब्रह्म, निर्गुणं ब्रह्म, निर्विशेषं ब्रह्म – इत्येतानि मुख्यब्रह्मणो नामानि । तच्च अस्थूलादिनिषेधशब्दैरुपदिश्यते श्रुतिभिः । तत्र च कारणत्वं सापेक्षम्, न तु स्वरूपगतम् । यद्यपि प्रजापतिवाक्ये कारणमेव ब्रह्म निर्दिष्टं 'स्वेन रूपेणाभिनिष्पद्यते' (८-१२-३) इति, तथापि 'स्त्रीभिर्वा' इत्यादयः सगुणब्रह्मोपासकैरनुभूयमाना ब्राह्मलौकिकाः कामाः सर्वात्मभूतेन ज्ञानिना संबध्यन्ते इत्यात्मज्ञानस्तुतये तत्र निर्दिष्टा इति व्याख्येयम्, अन्यथा 'एकमेवाद्वितीयम्' इत्यादितत्परश्रुतिकोपः स्यादिति भावः । द्रष्टव्यं च छान्दोग्यभाष्यम् (८-१२-३) ॥

7. नास्त्येव कारणत्वोपलक्षितमद्वितीयं ब्रह्मेत्याशङ्क्य शुद्धब्रह्मणि प्रमाणमाह इत्यादिश्रुतिभ्य इति ॥

ज्ञानकर्मसमुच्चय एवानुपपन्नः –

६४. विरोधाच्च विद्याकर्मणोः समुच्चयानुपपत्तिः । प्रविलीन[1]-कर्त्रादिकारकविशेषतत्त्वविषया हि विद्या[2] तद्विपरीतकारकसाध्येन कर्मणा विरुध्यते[3] । न हि, एकं वस्तु परमार्थतः कर्त्रादिविशेषवत् तच्छून्यं च – इति उभयथा द्रष्टुं शक्यते । अवश्यं हि अन्यतरत् मिथ्या स्यात्[4] । अन्यतरस्य च मिथ्यात्वप्रसङ्गे युक्तं यत् स्वाभाविकाज्ञान-विषयस्य[5] द्वैतस्य मिथ्यात्वम्[6] । 'यत्र हि द्वैतमिव भवति' (बृ. २–४–१४), 'मृत्योः स मृत्युमाप्नोति' (का. २–१–११, बृ. ४–४–१९), 'अथ यत्रान्यत् पश्यति तदल्पम्' (छां. ७–२४–१), 'अन्योऽसावन्योऽहमस्मि' (बृ. १–४–१०), 'उदरमन्तरं कुरुते । अथ तस्य भयं भवति' (२–७) इत्यादिश्रुतिशतेभ्यः[7] । सत्यत्वं च एकत्वस्य[8] । 'एकधैवानुद्रष्टव्यम्' (बृ. ४–४–२०), 'एकमेवाद्वितीयम्'

1. 'प्रलीन' वा॥

2. बृ. ४-५-१५, सू. भा. ३-४-१६.

3. यद्यपि उपासनारूपा विद्या न कर्मणा विरुध्यते, तया च कर्म-समुच्चितया अपरब्रह्मप्राप्तिश्च भवत्येव, तथापि न तया मुख्यब्रह्मप्राप्तिरित्युक्तं सिद्धान्तिना । मुख्या तु विद्या वस्तुतन्त्रं परब्रह्मज्ञानम् । तेन च कर्मणः समुच्चयो विरुध्यत इतीदानीमुच्यते ॥

4. वस्तुनि क्रियास्विव एवं नैवमिति विकल्पानुपपत्तेः॥ सू. भा. १-१-२.

5. अज्ञानं हि सर्वस्याप्यविचारितसिद्धं स्वाभाविकम्, ज्ञानेन त्वागन्तुकेन तन्निबर्हणीयम् ॥

6. स्वाभाविकाज्ञानविषयत्वाद् द्वैतस्य मिथ्यात्वं युक्तम् । अत एवोदाह-रिष्यमाणाः श्रुतयो युक्त्युपबृंहितास्तदपवदन्तीति भावः ॥

7. सत्यत्वे हि द्वैतस्य नैवं द्वैतदृष्टिर्विनिन्द्येत श्रुतिभिः – इति भावः ॥

8. 'युक्तम्' इत्यनुषज्यते । निर्दोषेण वेदेन सावधारणं प्रतिपादितत्वाद्युक्तम् एकत्वस्य नित्यत्वमित्यर्थः ॥

(छां. ६–२–१), 'ब्रह्मैवेदꣳ सर्वम्'[1] (?), 'आत्मैवेदꣳ सर्वम्' (छां. ७–२५–२) इत्यादिश्रुतिभ्यः। न च संप्रदानादिकारकभेदादर्शने[2] कर्म उपपद्यते। अन्यत्वदर्शनापवादाश्च विद्याविषये सहस्रशः श्रूयन्ते। अतो विरोधो विद्याकर्मणोः। अतश्च[3] समुच्चयानुपपत्तिः। तत्र[4] यदुक्तं संहताभ्यां विद्याकर्मभ्यां मोक्षः – इति, अनुपपन्नं तत्[5] ॥

## निरस्तकारकब्रह्मोपदेशे न श्रुतिविरोधः –

६५. विहितत्वात्[6] कर्मणां श्रुतिविरोध इति चेत्। यदि उपमृद्य[7] कर्त्रादिकारकविशेषम् आत्मैकत्वविज्ञानं विधीयते सर्पादिभ्रान्तिज्ञानोपमर्दकरज्ज्वादिविषयविज्ञानवत्, प्राप्तः कर्मविधिश्रुतीनां निर्विषयत्वाद्[8] विरोधः। विहितानि च कर्माणि। स च विरोधो न युक्त

1. 'ब्रह्मैवेदं विश्वम्' (मुं २–२–११) इति मुण्डकोपनिषत्पाठः। 'सर्वम्' इति तु वाक्यान्तरस्थमिति भाति। अन्यत्रापि (गी. भा. १३–१५, सू. भा. १–४–२२) ब्रह्मैवेदं सर्वम् – इत्येव पठितं दृश्यते यतः। यद्यपि नृसिंहोत्तरतापिन्यामस्तीदं वाक्यम्, तस्या उपनिषदो न किञ्चिद्वाक्यमुदाहृतमुपलभ्यते प्रस्थानत्रयभाष्ये ॥

2. अहमिदं करोम्येतां देवतामुद्दिश्य एतस्मै फलायेति अनुसंधाय कर्म क्रियते। तत्र संप्रदानकारकं देवतादि ॥

3. एवं विरोधाच्च इत्यर्थः। अत्र समुच्चयार्थासंभवात् चशब्दस्य एवार्थता स्वीकरणीया। विरोधादेव समुच्चयानुपपत्तौ दूरापास्ता ततो मोक्षसंकथेत्युत्तरवाक्येन संगतिश्चैवं स्यात् ॥ 4. सत्यां चैवं समुच्चयानुपपत्तौ ॥

5. वा॥ पाठे तु 'तत्र यदुक्तं...मोक्ष इत्येतदनुपपन्नमिति, तदयुक्तम्' इति श्रुतिविरोधपूर्वपक्षेण वक्ष्यमाणेन संबन्धः कृतः। आ॥ पाठ एवाऽस्माभिः॥

6. 'तद्विहितत्वात्' इति वा॥; तत्र तदित्यधिकम् ॥

7. अपबाध्य ॥

8. सति हि कर्त्रादिकारके कर्मविधेर्विषयः संभवति। तदभावे तु कर्मवाक्यस्याप्रामाण्यमेव स्यात्। किञ्च यथा कारकाभावे कर्मकाण्डमप्रामाण्यं भजते, तथा विद्योपदेशश्रुतिरपि। न हि बन्धमोक्षजिज्ञासाजिज्ञास्यादिभेदमनभ्युपगम्य तत्प्रवृत्तिर्भवेदिति पूर्वपक्षिहृदयम् ॥ बृ. भा. २–१–२०.

इति चेत् । न । पुरुषार्थो(पायो)पदेशपरत्वाच्छ्रुतीनाम्[1] । विद्योपदेशपरा तावत् श्रुतिः संसारात् पुरुषो मोक्षयितव्य इति संसारहेतोरविद्याया विद्यया निवृत्तिः कर्तव्या इति विद्याप्रकाशकत्वेन प्रवृत्ता — इति न विरोधः[2] ॥

एवमपि कर्त्रादिकारकसद्भावप्रतिपादनपरं[3] शास्त्रं विरुध्यत एवेति चेत् । न । यथाप्राप्तमेव[4] कारकास्तित्वम् उपादाय, उपात्तदुरितक्षयार्थं[5] कर्माणि विदधच्छास्त्रं मुमुक्षूणां, फलार्थिनां च फलसाधनम्[6], न कारकास्तित्वे व्याप्रियते[7] । उपचितदुरितप्रतिबन्धस्य हि विद्योत्पत्तिर्नावकल्पते । तत्क्षये च विद्योत्पत्तिः स्यात् । ततश्चाविद्यानिवृत्तिः, तत आत्यन्तिकः संसारोपरमः[8] ॥

---

1. पुरुषार्थोपायोपदेशपरत्वादिति भवितव्यम् । विद्या हि पुरुषार्थोपायः, न पुरुषार्थः । मुद्रितपुस्तकेषु तु 'पुरुषार्थोपदेशपरत्वात्' इत्येवोपलभ्यते ॥

2. द्वैतस्याविद्याकृतत्वात् तदपह्नवेन विद्यां बोधयन्ती श्रुतिर्न भेदास्तित्वपरेति वक्तुं युक्तम् । श्रुतेर्व्याहतवचनत्वप्रसङ्गात् । अतो न तस्याः केनचिद् विरोधः शक्यशङ्क इति भावः ॥

3. पूर्वपक्षी कारकसद्भावपरं कर्मकाण्डं मन्वानः शङ्कते ॥

4. लोकतः सिद्धमेव ॥

5. न तु केवलमकरणे प्रत्यवायपरिहारार्थम् ॥

6. 'विदधत्' इत्यनुषज्यते ॥

7. कर्मविधिपरं च कारकास्तित्वपरं चेति स्वीकारे हि वाक्यं भिद्येत । प्रत्यक्षं च तस्य विधिपरत्वम् । अतो न कारकास्तित्वे वाक्यव्यापार इत्यभिप्रायः ॥

8. एवं च परमपुरुषार्थोपायोपदेशपरत्वं कर्मकाण्डस्यापीत्युपपद्यते । तदर्थं विहितत्वात् । अमुमुक्षूणां तु तत्तदाकाङ्क्षितफलदायकोपायोपदेशपरत्वम् । नित्यानि च कर्तव्यानि भवन्ति विहितत्वादिति भावः (सू. भा. ३-४-३२) । यथा चात्र कर्मभेदेऽपि नित्यानित्यसंयोगविरोधाभावस्तथा शारीरकभाष्ये (३-४-३३) समुपपादितम् ॥

## विद्यायाः स्वफलदाने न कर्मापेक्षा –

६६. अपि च[1], अनात्मदर्शिनो ह्यनात्मविषयः कामः। कामयमानश्च करोति कर्माणि। ततस्तत्फलोपभोगाय शरीराद्युपादानलक्षणः संसारः। तद्व्यतिरेकेण, आत्मैकत्वदर्शिनो विषयाभावात् कामानुपपत्तिः[2]। आत्मनि चानन्यत्वात् कामानुपपत्तौ स्वात्मन्यवस्थानं मोक्षः[3] – इत्यतोऽपि विद्याकर्मणोर्विरोधः। विरोधादेव च विद्या मोक्षं प्रति न कर्माण्यपेक्षते[4]॥

## स्वोत्पत्तौ त्वपेक्षते कर्माणि विद्या –

६७. स्वात्मलाभे तु[5] पूर्वोपचितदुरितप्रतिबन्धापनयनद्वारेण विद्याहेतुत्वं प्रतिपद्यन्ते कर्माणि नित्यानी[6]त्यत एवास्मिन् प्रकरणे उपन्यस्तानि कर्माणि–इत्यवोचाम[7]। एवं चाविरोधः कर्मविधिश्रुतीनाम्। अतः केवलाया एव विद्यायाः परं श्रेय इति सिद्धम्॥

## विद्यायाः गार्हस्थ्यकर्माण्येवापेक्षितान्युत्पत्ताविति न नियमः –

६८. एवं तर्हि[8], आश्रमान्तरानुपपत्तिः। कर्मनिमित्तत्वाद् विद्योत्पत्तेः। गार्हस्थ्ये[9] च विहितानि कर्माणि – इत्यैकाश्रम्यमेव[10]।

1. न केवलं कारकोपमर्दकत्वकारकापेक्षत्वस्वरूपाभ्यां विरोधो विद्याकर्मणोः, किन्तु वक्ष्यमाणहेतोश्चेत्याह – अपि चेति॥

2. बृ. ४-४-६। अनेन कामवैराग्ययोर्हेतुतोक्ता कर्मज्ञाने प्रति॥

3. एवं च स्वरूपहेतुफलैर्विरोधो विद्याकर्मणोरिति भावः॥

4. तथा च कर्मापेक्षया विद्यायाः परं श्रेय इति कल्पो निरस्तो भवतीति भावः॥

5. एवं सर्वथापि कर्मनिरपेक्षता विद्याया इत्येवं प्राप्ते इदमुच्यते – विद्योत्पत्तिहेतुत्वमस्त्येव कर्मणामिति॥ सू. भा. ३-४-३३, ३५.

6. काम्यानि तु यथोक्तरीत्या विद्याविरोधीन्येवेति त्याज्यान्येव मुमुक्षुणेति भावः॥ 7. भा. भा. ५१. 8. यदि दुरितक्षयादेव विद्योत्पत्तिः, तर्हि॥

9. गृहस्थस्यैव वा॥ 10. 'एकाश्रम्यं त्वाचार्याः प्रत्यक्षविहितत्वाद्गार्हस्थ्यस्य' (गौ. ध. १-३-३५) इति स्मृतेः॥

अतश्च[1] यावज्जीवादिश्रुतयोऽनुकूलतराः[2] । न । कर्मानेकत्वात् । न हि अग्निहोत्रादीन्येव कर्माणि । ब्रह्मचर्यं, तपः, सत्यवदनं, शमः, दमः, अहिंसा—इत्येवमादीन्यपि[3] कर्माणीतराश्रमप्रसिद्धानि[4] विद्योत्पत्तौ साधकतमानि[5]—असङ्कीर्णत्वात्[6] – विद्यन्ते ध्यानधारणादिलक्षणानि च[7] । वक्ष्यति च 'तपसा ब्रह्म विजिज्ञासस्व' (३–२) इति[8] । जन्मान्तरकृतकर्मभ्यश्च प्रागपि[9] गार्हस्थ्याद् विद्योत्पत्तिसंभवात् । कर्मार्थत्वाच्च गार्हस्थ्यप्रतिपत्तेः, कर्मसाध्यायां च विद्यायां सत्यां गार्हस्थ्यप्रतिपत्तिरनर्थिकैव[10]। लोकार्थत्वाच्च

---

1. एकाश्रम्याङ्गीकाराच्च ॥

2. 'यावज्जीवश्रुतिर्बह्वृचब्राह्मणे पठ्यते' इति शा. भा. २–४–१. 'अनुकूलतराः स्युः' इति वा॥

3. ब्रह्मचर्यम् , तपः, सत्यम् – इत्येतानि छां., तै., मुं – इत्याद्युपनिषत्सु विहितानि । शमदमादयश्च बृहदारण्यके (४–४–२३); अहिंसा च छां. ८–१५–१ इत्यादिश्रुतिषु । एवमादीनीति निवृत्तिप्रधानानीतराणि कर्माणि संगृह्यन्ते ॥

4. न हि तेषामग्निहोत्रादीनि सन्ति । न चाश्रमान्तराणि न सन्ति । विहितत्वादेव तेषामपि ॥ सू. भा. ३–४–१९, २०.

5. अन्तरङ्गानि । यमप्रधानत्वात् ॥

6. असङ्कीर्णाः इति (वा॥) पाठो न शुद्धः । यद्यपि गृहस्थानामपि ब्रह्मचर्यादीनि सन्ति । तथापि तानि ऋतौ भार्यागमनम् इत्येवमादिभिः सङ्कीर्णानि । असङ्कीर्णानि त्वितराश्रमकर्मणेति संपन्नतराणि तानि साधनानि मोक्षं प्रति ॥

7. ध्यानादयस्तु गार्हस्थ्यकर्मरहितानामेव विहितानीति तेषां पृथग्ग्रहणम् । गी. भा ६ अव.

8. तत्र हि अग्निहोत्रादिकर्मव्यतिरिक्तं तपः मनआद्यैकाग्र्यलक्षणं ब्रह्मज्ञानसाधनत्वेनोपदिष्टमिति भावः ॥

9. न चेहजन्मकृतमेव कर्म विद्योत्पत्तिकारणमिति नियमः । प्राग्जन्मकृतकर्मपरिपाकेनापि तदुत्पत्त्युपपत्तेर्वामदेवादीनामिव । के. भा. ४–८; ऐ. भा. २–५; गी. भा. ३–४; सू. भा. ४–१–१८; अतः प्रागपि गार्हस्थ्यात् ज्ञानसंभवः । अत एव ब्रह्मचर्यादेव प्रव्रजेत् इत्यादिजाबालश्रुतौ पठ्यते ॥

10. 'कर्मार्थत्वात्' इति ज्ञानकारणकर्मार्थत्वात् इत्यर्थः । मुमुक्षूणामेवात्र प्रकृतत्वात् ब्रह्मचर्याश्रम एवोत्पन्नज्ञानानां गार्हस्थ्यप्रतिपत्तिर्व्यर्थेति, नापेक्षिता – इति वाक्यार्थः ॥

पुत्रादीनाम् । पुत्रादिसाध्येभ्यश्च 'अयं लोकः', 'पितृलोकः', 'देवलोकः'[1] — इत्येतेभ्यो व्यावृत्तकामस्य नित्यसिद्धात्मलोकदर्शिनः[2] कर्मणि प्रयोजनम् अपश्यतः कथं प्रवृत्तिरुपपद्यते[3] ? प्रतिपन्नगार्हस्थ्यस्यापि विद्योत्पत्तौ विद्यापरिपाकात् विरक्तस्य कर्मसु प्रयोजनम् अपश्यतः कर्मभ्यो निवृत्तिरेव स्यात्[4] । 'प्रव्रजिष्यन् वा अरेऽहमस्मात् स्थानादस्मि' (बृ. ४-५-२) इत्येवमादिश्रुतिलिङ्गदर्शनात्[5] ॥

## कर्मणि श्रुतेर्यत्नाधिक्यं कारणम् —

६९. कर्म प्रति श्रुतेर्यत्नाधिक्यदर्शनादयुक्तमिति चेत् । अग्निहोत्रादिकर्म प्रति[6] श्रुतेरधिको यत्नः । महांश्च कर्मण्यायासः[7] । अनेकसाधनसाध्यत्वादग्निहोत्रादीनाम् । तपो ब्रह्मचर्यादीनां च इतराश्रम-

1. बृ. (१-५-१६) श्रुत्युक्तानां पुत्रकर्मोपासनानां यथासंख्यं मनुष्यादिलोकफलत्वात् न तेभ्यो लोकेभ्यो विरक्तस्य तैः साधनैरर्थ इत्यभिप्रायः ॥

2. लोकशब्दस्त्यक्तो वा॥; आत्मैव लोको नान्यो ज्ञानिनः ॥ बृ ४-४-२२.

3. मनुष्यादिलोकसाधने पुत्रकर्मादौ प्रयोजनं न पश्यति, तत्रैव प्रवर्तते च — इति हि विप्रतिषिद्धम् ॥

4. विक्षेपहेत्वभावे ऐकात्म्ये एवावस्थानं विद्यायाः परिपाकः । तस्मिन्निष्पन्ने कर्मभ्यो निवृत्तिरेव स्यादित्यर्थः । अथवा विद्यापरिपाकात् इति विद्यापरिपाकहेतोरित्यर्थः । तदर्थम् इति यावत् । विद्यपरिपाकार्थं कर्मभ्यो निवृत्तिरेव स्यात् इति संबन्धः । कर्मसंन्यासस्य विद्यापरिपाकाङ्गत्वमुक्तं सू. भा. ३-४-२०, गी. भा. १८-५५ इत्यादिस्थलेषु ॥

5. विदुषो गृहस्थस्यापि कर्मभ्यो निवृत्तिरेवेत्यत्र लिङ्गमिदमिति भावः ॥

6. पूर्वपक्षसंग्रहवाक्यं विवृणोति 'अग्निहोत्रादिकर्म प्रति' इत्यादिना 'चेत्' इत्यन्तेन ॥

7. ज्ञानमात्रादेव यदि कैवल्यं सिध्येत् को जातुचिद्बहुद्रव्यायाससाध्यं कर्म कुर्यात् इति भावः । द्रष्टव्यमत्र तन्त्रवार्तिकोक्तं (१-३-८, पृ. २८७, २८८) ज्ञानकर्मसमुच्चयप्रसाधनम् ॥

कर्मणां गार्हस्थ्येऽपि समानत्वात्[1], अल्पसाधनापेक्षत्वाच्चेतरेषां[2] न युक्तस्तुल्यवद्विकल्प आश्रमिभिस्तस्य – इति चेत् । न । जन्मान्तरकृतानुग्रहात्[3] । यदुक्तं[4] कर्मणि श्रुतेरधिको यत्नः – इत्यादि । नासौ दोषः[5] । यतो जन्मान्तरकृतमप्यग्निहोत्रादिलक्षणं कर्म, ब्रह्मचर्यादिलक्षणं च – अनुग्राहकं भवति विद्योत्पत्तिं प्रति ; येन[6] जन्मनैव विरक्ता दृश्यन्ते केचित्, केचित्तु कर्मसु प्रवृत्ता अविरक्ता विद्याविद्वेषिणः[7] । तस्मात्, जन्मान्तरकृतसंस्कारेभ्यो विरक्तानाम् आश्रमान्तरप्रतिपत्तिरेवेष्यते[8] ॥

कर्मफलबाहुल्याच्च[9] । पुत्रस्वर्गब्रह्मवर्चसादिलक्षणस्य[10] कर्मफलस्य असंख्येयत्वात्, तत् प्रति च पुरुषाणां कामबाहुल्यात्, तदर्थः श्रुतेरधिको

---

1. गृहस्थस्य ब्रह्मचर्यादेः संकीर्णत्वं यदुक्तं पुरा (भा॰ भा॰ ६८) तत् प्रस्मृतमिह पूर्वपक्षिणा ॥

2. इतराश्रमधर्माणामहिंसादीनाम् अधिकतरयत्नसाध्यत्वमिहोपेक्षितं पूर्वपक्षिणा ॥ 3. पूर्वोक्तं (भा॰ भा॰ ६८, पृ॰ ६३, टि॰ 9) स्मारयति ॥

4. संग्रहवाक्यं विवृणोति 'यदुक्तम्' इत्यादिना 'इष्यते' इत्यन्तेन ॥

5. असौ इतराश्रमिणां गार्हस्थ्येन तुल्यवद्विकल्पः, न दोषः ॥

6. येन अनुग्राहकब्रह्मचर्यादिबलेनेत्यर्थः । 'येन च' इति चयुक्त-(वा॥) पाठे चकारोऽवधारणार्थः ॥ 7. तादृशानुग्राहकविरहात् इति शेषः ॥

8. न तु कर्मप्रधानं गार्हस्थ्यम् । जन्मान्तरकृतकर्मसंस्कृतान्तःकरणानां कर्मभिः प्रयोजनाभावात् – इत्यभिप्रायः ॥

9. कर्मसु यत्नाधिक्यं श्रुतेर्नाश्रमान्तरविकल्पाश्रयणबाधकमित्युक्तम्, जन्मान्तरकृतस्यापि कर्मणो विद्योत्पत्तिं प्रत्यनुग्राहकत्वमाश्रित्य । अविरक्तविद्याविद्वेषिविषयत्वसंभवाद्यत्नाधिक्यस्येति । इदानीमेतज्जन्मकृतकर्मणामेवानुग्राहकत्वेऽङ्गीकृतेऽपि यत्नाधिक्यस्यान्यथासिद्धत्वात्, न तद्विकल्पविघातकमित्युपपादयन्नाह कर्मफलबाहुल्याच्चेति ॥

10. संग्रहवाक्यविवरणं पुत्रस्वर्गेत्याद्यारभ्य इतीत्यन्तम् । यत्नाधिक्यमुक्तं किं काम्यकर्मविषयम्, आहोस्विन्नित्यकर्मविषयम् ? – इति विकल्प्याद्यं प्रत्याह 'फलस्यासंख्येयत्वात्, पुरुषाशिषां च बाहुल्यात्' इति । कामबाहुल्यं प्रपञ्चितं द्रष्टव्यं तै॰ सं॰ २-१-१ इत्यादौ ॥

नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् ॥ १२ ॥

ओं शान्तिः शान्तिः शान्तिः ॥



# अथ शीक्षावल्लीसारः

**अत्र प्रतिप्रघट्टं दत्ताः सङ्ख्या अनुवाकसूचकाः**

१. ब्रह्मविविदिषुणा कार्यकरणसंघाताभिमानिन्यो मित्रवरुणाद्या देवता नित्यं सुखकरणार्थं प्रार्थनीयाः। यतस्तासु सुखकृत्सु विद्याश्रवणधारणोपयोगा अप्रतिबन्धेन भविष्यन्ति। एवं ब्रह्मविद्योपसर्गशान्त्यर्थमपरब्रह्मणो वायोर्नमस्कारः कार्यः, स्तोत्रं च। शीक्षावल्ल्या आद्यानुवाकान्ते 'ओं शान्तिः शान्तिः शान्तिः' इति त्रिर्वचनम् आध्यात्मिकाधिभौतिकाधिदैविकानां विद्याप्राप्त्युपसर्गाणां प्रशान्त्यर्थम्॥

२. यद्यप्युपनिषदियमर्थप्रधाना, तथापि वर्णस्वराद्यलोपेन ग्रन्थपाठेऽपि प्रयत्नः कार्यः॥

३. साधकानां सौकर्यार्थम् आदौ शब्दप्रधानान्येवोपासनान्यत्रोपदिश्यन्ते। तत्रापि प्रप्रथमं वेदे समुपलभ्यमानाः संहिता अधिकृत्य अधिलोकम्, अधिज्यौतिषम्, अधिविद्यम्, अधिप्रजम्, अध्यात्मं चेति पञ्चधा दृष्ट्या उपासनम् उपदिश्यते। तद्यथा – (१) संहितायाः पूर्वे वर्णे पृथिवीदृष्टिः कर्तव्या। उत्तरवर्णे चान्तरिक्षदृष्टिः। तत्सन्धौ मध्ये आकाशदृष्टिः पूर्वोत्तरयोरुभयोः सन्धानसाधने वायुदृष्टिः। इत्यधिलोकमुपासनम्। (२) एवं पूर्ववर्णादिषु यथोक्तेषु यथाक्रमम् अग्निः, आदित्यः, आपः, विद्युत् – इति दृष्टिकरणमधिज्यौतिषमुपासनम्। (३) आचार्यः, अन्तेवासी, विद्या, प्रवचनम् – इति दृष्टिरधिविद्यम्। (४) माता, पिता, प्रजा, प्रजननम् – इति दृष्टिश्चाधिप्रजमुपासनम्। (५) अधरा हनुः, उत्तरा हनुः, वाक्, जिह्वा – इत्यध्यात्ममुपासनम्। एवं महावस्तुदृष्ट्याधारत्वात् एता महासंहिता उच्यन्ते। एवं महासंहितोपासनं योऽनुतिष्ठति तस्य साचार्यस्य प्रजापशुब्रह्मवर्चसान्नाद्यस्वर्गलोकरूपाणि फलानि भवन्ति॥

४. मुमुक्षुणा यश्छन्दसाम् इत्ययं मन्त्रो वेदसारभूतोङ्कारस्तुतिपरः सततं जप्यः। तेन मेधाप्राप्तिर्भवति। कार्यकरणसंघातश्चाऽऽत्मज्ञानयोग्यो भवति। एवं श्रीप्राप्त्या कर्मानुष्ठानेन चित्तशुद्धिं प्राप्य परम्परया ज्ञानं प्रेप्सुणा 'आवहन्ती' इत्यादिभिर्मन्त्रैर्होमः कर्तव्यः। एवमोंकारं जपहोमाभ्यां समुपास्य क्रमेण ज्ञानी भवति। अनेकब्रह्मचार्यन्तेवासिसेव्यश्च॥

५.–६. मह इति व्याहृत्यात्मनो ब्रह्मण अन्तरुपासनं कर्तव्यम्। भूर्भुवःसुवरित्येतासां चतुर्थीमेतां व्याहृतिं माहाचमस्यःप्रवेदयाञ्चकार। तदेव च ब्रह्म। इतरव्याहृतीनामात्मा चेयम्, तद्व्यापकत्वात्। ताश्च तिस्रो व्याहृतयः प्रत्येकं चतुर्धा। तद्यथा। अयं लोकः, अग्निः, ऋग्वेदः, प्राणः – इति प्रथमा व्याहृतिर्भूरिति। एवम् अन्तरिक्षम्,

वायुः, सामानि, अपानः – इति द्वितीया भुव इति । असौ लोकः, आदित्यः, यजूंषि, व्यानः – इति तृतीया सुवरिति । महआत्मकं तु ब्रह्म आदित्यचन्द्र-प्रणवान्नरूपेण लोकज्योतिर्वेदप्राणात्मिका व्याहृतीर्व्याप्नोतीति ता अस्या ब्रह्मदृष्ट्यर्हाया व्याहृतेरङ्गभूताः । तच्चेदं व्याहृत्यात्मकं ब्रह्म हृदयाकाशे स्थितो मनोमयोऽमृतो हिरण्मयः पुरुष इति आकाशशरीरं मूर्तामूर्तरूपं प्राणाराममानन्दकृन्मनोविशिष्टं शान्त्या सम्यगुपलभ्यमानं ब्रह्मेति चैवं गुणविशिष्टमुपास्यम् । एवं य उपास्ते स देहत्याग-समये हृदयादूर्ध्वगामिन्या सुषुम्नानाड्या मूर्धभेदिन्या द्वारेण विनिष्क्रम्य भूरिति व्याहृतिरूपेऽग्नौ प्रतितिष्ठति । ततो भुव इति व्याहृतिरूपे वायौ । ततश्च सुवरित्यादित्ये । एवं क्रमेणाङ्गभूतदेवतासायुज्यं प्राप्य तदनु यथोक्तमनोमयादिगुणकस्य महइत्यङ्गिनः सायुज्यं प्राप्य स्वराड् भवतीत्येवं महाफलमिदमुपासनम् ॥

७. एतस्यैव ब्रह्मणो लोकपाङ्क्तं, देवतापाङ्क्तं, भूतपाङ्क्तं च, तथा वायुपाङ्क्तं, इन्द्रियपाङ्क्तं, धातुपाङ्क्तम् – इति च पाङ्क्तस्वरूपेणाप्युपासनं विधीयते । पाङ्क्तत्वं नाम पञ्चधा विभक्तत्वम् । यज्ञस्य पाङ्क्तत्वं श्रुतिप्रसिद्धमिति यथोक्तोपासनया सर्वं यज्ञत्वेन कल्पितं भवति । अत्र च बाह्यपाङ्क्तमाध्यात्मिकेन पाङ्क्तेन श्रुत्युक्तप्रकारेण पूरणीयम् । ततश्च पाङ्क्तात्मकप्रजापतित्वफलमुपासकस्य भवति ॥

८. परापरब्रह्मोपासनाङ्गभूतः प्रणवः । तस्य च ब्रह्मणः प्रतीकभूतस्योपास-नेन परमपरं वा ब्रह्म प्राप्यते । ओंकारपूर्वकं प्रवृत्तानां सर्वासां क्रियाणां फलवत्त्व-दर्शनात् ओंकारं ब्रह्मेत्युपासीतेति विधीयते ॥

९. उपासनादेव स्वाराज्यप्राप्तेरुक्तत्वात् श्रौतस्मार्तकर्माण्यकिञ्चित्कराणीति न मन्तव्यम् । ऋतं, सत्यं, तपो, दमः, शमोऽग्निहोत्रम्, अतिथिपूजा, लौकिकः संव्यवहारः प्रजासन्तत्यर्थं कर्म चेत्येतत्सर्वमप्यनुष्ठेयमेव । तत्राप्यध्ययनमध्यापनं सत्यं तप इत्येतानि प्राधान्येनानुष्ठेयानि ॥

१०. 'अहं वृक्षस्य' इति मन्त्रो मुमुक्षुभिः सततं जप्यः । तस्य ज्ञान-प्रकाशकत्वात् । कर्मोपदेशानन्तरं तस्य पाठात् श्रौतस्मार्तकर्मानुष्ठानपराणां निष्कामानां ब्रह्मविविदिषूणामेवंविधान्यार्षाणि दर्शनानि प्रादुर्भवन्तीत्यवगम्यते ॥

११. न केवलम् अवश्यकर्तव्यत्वोपदेशात्, किन्तु चित्तशुद्धिद्वारा ज्ञानो-त्पत्त्यर्थमपि कर्माणि नियमेनानुष्ठेयानि मुमुक्षुभिः । कर्माण्युपासनानि चात्र वल्ल्यामुप-दिष्टानि शास्त्रविहितानि, गुर्वनुशासनरूपाणि, वेदरहस्यानि चेति सर्वथा पुरुषार्थसाधनानि भवन्तीति शिवम् ॥

इति श्रीमत्परमहंसपरिव्राजकवरेण्यश्रीमत्पूज्यपादशङ्करभगवच्चरणस्मरणपरिचर्ययावाप्त-वेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्यश्रीसच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीतं वल्लीसारसहितं शीक्षावल्लीभाष्यटिप्पणम्

अथ शीक्षावल्ल्याः

# अनुवाकानामक्षरानुक्रमणिका

# अथ भाष्यस्थमुख्यशब्दसूची

अत्र दत्ताः सङ्ख्या भाष्यभागपरामर्शिन्यः